श्रीहरिः ।

# कालमाधवः ।



विद्वद्वरश्रीमाधवाचार्यविरचितः ।

चौखम्बासंस्कृतसिरीजाध्याक्षहरिकृष्णदाससंमुद्रितः ।

# KÂLAMÂDHAVA,

BY

ŚRÎ MÂDHAVÂ CHÂRYA.

Edited by

Pandit Ratna Gopâl Bhatta.

PRINTED BY HARIKRISHNA DÂS, PROPRIETOR,
AT THE VIDYÂ VILÂSA PRESS.
BENARES CITY.

1909.

1-2-0

श्रीगणेशाय नमः ॥

# अथ कालमाधवः ।

## विद्वद्वरश्रीमाधवाचार्यविरचितः ।

वागीशाद्याः सुमनसः सर्वार्थानामुपक्रमे ।
यं नत्वा कृतकृत्याः स्युस्तं नमामि गजाननम् ॥ १ ॥
सोऽहं प्राप्य विवेकतीर्थपदवीमाम्नायतीर्थे परं
मज्जन् सज्जनसङ्गतीर्थनिपुणः सद्वृत्ततीर्थं श्रयन् ॥
लब्धामाकलयन् प्रभावलहरीं श्रीभारतीतीर्थतो
विद्यातीर्थमुपाश्रयन् हृदि भजे श्रीकण्ठमव्याहतम् ॥ २ ॥
सत्यैकव्रतपालको द्विगुणधीस्त्र्यर्थी चतुर्वेदिता
पञ्चस्कन्धकृती षडन्वयदृढः सप्ताङ्गसर्वंसहः ॥
अष्टव्यक्तिकलाधरो नवनिधिः पुष्यद्दशप्रत्ययः
स्मार्त्तोच्छ्रायधुरन्धरो विजयते श्रीबुक्कणक्ष्मापतिः ॥ ३ ॥
व्याख्याय माधवाचार्यो धर्मान् पाराशरानथ
तदनुष्ठानकालस्य निर्णयं वक्तुमुद्यतः ॥ ४ ॥
व्यामूढानामिह तनुभृतां जाह्नवीतीर्थमेकं
विद्यातीर्थं प्रकृतिविमलं सद्विवेकोदयानाम् ॥
सर्वेषां तत्प्रथमसुखदं भारतीतीर्थमाहु-
स्तद्भावान्मे विपुलमनसो निर्णये शक्तिरस्ति ॥ ५ ॥
अर्थोऽनुक्रम्यते श्लोकैरखिलो निर्णिनीषितः ॥
तावतैवानुतिष्ठासुर्निःसन्देहं प्रवर्त्तताम् ॥ ६ ॥
ततो मीमांसुचित्तस्य समाधानाय तत्पुनः ॥

वित्तरिष्ये यथान्यायं श्रुतिस्मृतिवचोबलात् ॥ ७ ॥
पञ्च प्रकरणान्यत्र तेषूपोद्घातवत्सरौ ।
प्रतिपच्छिष्टतिथयो नक्षत्रादिरिति क्रमः ॥ ८ ॥
उपोद्घाते कालसत्त्वं तस्य निर्णययोग्यता ।
ईश्वरो नित्यकालात्मा चिन्तनीयः स कर्मसु ॥ ९ ॥
जन्ये कालेऽब्दमुख्यत्वमुक्तमेतच्चतुष्टयम् ॥
अब्दायनर्त्तुमासाश्च पक्षः प्रकरणान्तरे ॥ १० ॥
अब्दः पञ्चविधश्चान्द्रो व्रतादौ तिलकादिके ॥
सुजन्मादिव्रते सौरो गोसत्रादिषु सावनः ॥ ११ ॥
त्रयोऽप्याचार्यसेवादौ विकल्पन्ते निजेच्छया ॥
आयुर्दाये हि नाक्षत्रो बार्हस्पत्योऽधिवत्सरे ॥ १२ ॥
चान्द्राणां प्रभवादीनां पञ्चके पञ्चके युगे ॥
संपरीडान्विदित्येतच्छब्दपूर्वास्तु वत्सराः ॥ १३ ॥
तिलो यवो वस्त्रधान्यरजतं दीयतेऽत्र तु ॥
उग्रे कर्मणि शान्ते च स्तोऽयने दक्षिणोत्तरे ॥ १४ ॥
वसन्ताद्यृतवो द्वेधा चान्द्राः सौराश्च चान्द्रगाः ॥
चैत्राद्या ह्यथ मीनाद्या मेषाद्या वा विवस्वतः ॥ १५ ॥
तेष्वाधानादयस्तद्वत् षण्मूर्त्तिव्रतपूजनम् ॥
मासास्तु सावनः सौरश्चान्द्रो नक्षत्र इत्यमी ॥ १६ ॥
दर्शान्तः पूर्णिमान्तो वा चान्द्रोऽसौ विप्रवैश्ययोः ॥
सौरो राज्ञः सावनस्तु यज्ञे ज्योतिषिके परः ॥ १७ ॥
माघादिमासभेदेषु तिलदानादयः स्मृताः ॥
चान्द्रोऽधिमासोऽसंक्रान्तः सोऽन्तर्भवति चोत्तरे ॥ १८ ॥
असंक्रान्तावेकवर्षे द्वौ चेत् संसर्प आदिमः ॥
क्षयमासो द्विसंक्रान्तः सचांहस्पतिसंज्ञकः ॥ १९ ॥

त्रयस्त्वाज्या विवाहादौ संसर्पांहस्पती उभौ ॥
शुद्धौ श्रौते तथा स्मार्त्ते मलमासो विविच्यते ॥ २० ॥
काम्यारम्भं तत्समाप्तिं मलमासे विवर्जयेत् ॥
आरब्धं मलमासात् प्राक् कृच्छ्रसत्रादिकं तु यत् ॥
तत्समाप्यं सावनस्य मानस्यानतिलङ्घनात् ॥ २१ ॥
आरम्भस्य समाप्तेश्च मध्ये स्याच्चेन्मलिम्लुचः ॥
प्रवृत्तमखिलं काम्यं तदानुष्ठेयमेव तु ॥ २२ ॥
कारीर्यादि तु यत्काम्यं तस्यारम्भसमापने ॥
कार्ये कालविलम्बस्य प्रतीक्षाया असम्भवात् ॥ २३ ॥
अनन्यगतिकं नित्यमग्निहोत्रादि न त्यजेत् ॥
गत्यन्तरयुतं नित्यं सोमयागादि वर्जयेत् ॥ २४ ॥
अगति ग्रहणस्नानं जातेष्टिर्गतिसंयुता ॥
द्वयं नैमित्तिकं यस्य व्यवस्था नित्यवन्मता ॥ २५ ॥
शुद्धमासमृतानां स्यान्मलिने प्रथमाब्दिकम् ॥
मलमासमृतानां तु मले स्यादाब्दिकान्तरम् ॥ २६ ॥
दैवे मुख्यः शुक्लपक्षः कृष्णः पित्र्ये विशिष्यते ॥
तृतीये तु प्रकरणे वर्णिता प्रतिपत्तिथिः ॥ २७ ॥
प्रतिपन्नाम विज्ञेया चन्द्रस्य प्रथमा कला ॥
शुक्लपक्षे विशेच्चन्द्रं कृष्णपक्षे विनिःसरेत् ॥ २८ ॥
शुद्धा विद्धा तिथिः शुद्धा हीना तिथ्याऽन्यथाऽहनि ॥
उदये पूर्वया तिथ्या विद्ध्यते त्रिमुहूर्त्तकैः ॥ २९ ॥
सायं तूत्तरया तद्वन्न्यूनया तु न विद्ध्यते ॥
वेध्यापि त्रिमुहूर्त्तैव न न्यूना वेधमर्हति ॥ ३० ॥
शुद्धायां नास्ति संदेहो दैवे पित्र्ये च कर्मणि ॥
उपवासश्चैकभक्तं नक्तं चायाचितं व्रतम् ॥ ३१ ॥

दानं च षड्विधं दैवं क्रमादत्र विविच्यते ॥
एकोद्दिष्टं पार्वणं च पित्र्यं द्विविधमीर्यते ॥ ३२ ॥
शुक्लपक्षे दर्शविद्धा कृष्णे विद्धा द्वितीयया ॥
उपोष्या प्रतिपच्छुक्ले मुख्या स्यादापराह्णिकी ॥ ३३ ॥
तदभावे तु सायाह्ने व्यापिनी परिगृह्यताम् ॥
प्रातःसङ्गवमध्याह्नाऽपराह्णाः सायमित्यसौ ॥ ३४ ॥
अत्राह्नः पञ्चधा भागो मुख्यो द्वित्र्यादिभागतः ।
अभावेऽपि प्रतिपदः सङ्कल्पः प्रातरिष्यते ॥ ३५ ॥
तिथिस्त्रियामतोऽर्वाक्चेत्तिथ्यन्ते पारणं भवेत् ॥
यामत्रयोर्ध्वगामिन्यां प्रातरेव हि पारणम् ॥ ३६ ॥
वल्युत्सवं च पूर्वेद्युरुपवासवदाचरेत् ॥
मुख्या तिथ्यन्तराये तु तिथिशेषोऽपि गृह्यताम् ॥ ३७ ॥
शुद्धाधिका तु कृष्णापि पूर्वा सम्पूर्त्तिसम्भवात् ॥
ग्रहीतव्या त्वेकभक्ते मध्याह्नव्यापिनी तिथिः ॥ ३८ ॥
परेद्युरेव तद्व्याप्तिः पूर्वेद्युर्वा दिनद्वये ॥
नोभयत्रोभयत्रांशे साम्यं वैषम्यमित्यमी ॥ ३९ ॥
षट् पक्षास्तेषु चैकैकव्याप्तौ सैवात्र गृह्यताम् ॥
दिनद्वयेऽपि तद्व्याप्तावव्याप्तौ चैकदेशतः ॥ ४० ॥
समव्याप्तौ च पूर्वैव वैषम्ये त्वधिकेष्यताम् ॥
अन्याङ्गस्यैकभक्तस्य कालस्त्वङ्ग्यनुसारतः ॥
उपवासप्रतिनिधेः स्थितिः स्यादुपवासवत् ॥ ४१ ॥
प्रदोषव्यापिनी नक्ते तिथिर्व्याप्तिर्दिनद्वये ॥
अव्याप्तिर्वाऽथवांशेन व्याप्तिः स्यात् सर्वथोत्तरा ॥ ४२ ॥
सौरनक्ते तु सायाह्नव्यापिनी न प्रदोषगा ॥
अयाचिते तु तिथयः स्वीकार्या उपवासवत् ॥ ४३ ॥

सोदयत्रिमुहूर्त्तायां कुर्याद्दानं व्रतानि च ॥
उभयत्र तथात्वे तु पूर्वेद्युस्तदनुष्ठितिः ॥ ४४ ॥
परत्रैव तथात्वं चेत् पूर्वा ग्राह्या तिथिक्षये ॥
तिथेः साम्ये च वृद्धौ च गृह्यतां तिथिरुत्तरा ॥
अस्पर्शे चैकदेशस्य व्याप्तौ पूर्वैव गृह्यताम् ॥ ४५ ॥
एकोद्दिष्टे तु मध्याह्नयुक्ता स्यादेकभक्तवत् ॥
एकदेशसमव्याप्तौ क्षये पूर्वान्यथोत्तरा ॥ ४६ ॥
कुतपाद्यपराह्णान्तव्याप्तिराब्दिक उत्तमा ॥
तदभावेऽपराह्णस्य व्यापिका गृह्यतां तिथिः ॥ ४७ ॥
क्षये पूर्वोत्तरावृद्धौ व्याप्तिश्चेदपराह्णयोः ॥
न ग्राह्यतिथिजौ वृद्धिक्षयावूर्ध्वतिथेस्तु तौ ॥ ४८ ॥
साम्यात्तूर्ध्वतिथेर्ग्राह्या परविद्धैव वृद्धिवत् ॥
न स्पृशेदपराह्णौ चेत् पूर्वा स्यात् कुतुपो वृथा ॥ ४९ ॥
वैषम्येणैकदेशस्य व्याप्तौ ग्राह्या महत्त्वतः ॥
साम्येन चेत् क्षये पूर्वा परा स्याद् वृद्धिसाम्ययोः ॥ ५० ॥
वृद्धिसाम्यक्षया ग्राह्यतिथिगा नोर्ध्वगा इह ॥
द्वितीयाद्यास्तु पर्वान्ताः सूर्यप्रकरणोदिताः ॥ ५१ ॥
सञ्चारणीयः सामान्यात्तिथिषु प्रतिपन्नयः ॥
क्वचित् क्वचिद्विशेषोऽस्ति सोऽयमत्राभिधीयते ॥ ५२ ॥
पूर्वेद्युरसती प्रातः परेद्युस्त्रिमुहूर्त्तगा ॥
सा द्वितीया परोपोष्या पूर्वविद्धा ततोऽपरा ॥ ५३ ॥
रम्भातृतीया पूर्वा स्यादुत्तरा स्याद् व्रतान्तरे ॥
परेऽह्नि नास्तिचेत् पूर्वविद्धाऽप्यस्तु व्रतान्तरे ॥ ५४ ॥
मुहूर्तमात्रसत्त्वेऽपि दिने गौरीव्रतं परे ॥
शुद्धाधिकायामप्येवं गणयोगप्रशंसनात् ॥ ५५ ॥

चतुर्थी तु परोपोष्या गणनाथव्रतस्य तु ॥
मध्याह्नव्यापिनी पूज्या तद्वन्नागचतुर्थ्यपि ॥ ५६ ॥
परेद्युरेव मध्याह्नव्याप्तौ विघ्नस्य सोत्तरा ॥
अन्यथा पूर्वविद्धैव मातृयोगप्रशस्तितः ॥ ५७ ॥
पूर्वेद्युरेव तद्व्याप्तौ पूर्वसर्पप्रिया तिथिः ॥
नोचेव सर्पस्य पञ्चम्या योगोऽत्यन्तं प्रशस्यते ॥ ५८ ॥
गौर्याः शुद्धजयाप्यस्तु नागविद्धा निषिध्यते ॥
सर्वत्र पञ्चमी पूर्वा ग्राह्या स्कन्दव्रते परा ॥ ५९ ॥
नागविद्धा स्कन्दषष्ठी सा निषिद्धा व्रतान्तरे ॥
उत्तरस्या अलाभे तु नागविद्धैव गृह्यताम् ॥
विना द्वादशनाडीभिर्नागवेधो न दोषकृत ॥ ६० ॥
सप्तमी पूर्वविद्धैव व्रतेषु निखिलेष्वपि ॥
अलाभे पूर्वविद्धायाः परविद्धैव गृह्यताम् ॥ ६१ ॥
व्रतमात्रेऽष्टमी कृष्णा पूर्वा शुक्लाष्टमी परा ॥
दूर्वाष्टमी तु शुक्लाऽपि पूर्वविद्धा विधीयते ॥ ६२ ॥
पक्षद्वयेऽप्युत्तरैव शिवशक्तिमहोत्सवे ॥
ज्येष्ठर्क्षयोगे पूर्वापि ग्राह्या ज्येष्ठाव्रते तिथिः ॥ ६३ ॥
मध्याह्नादूर्ध्वमृक्षं चेत परेद्युः सा प्रशस्यते ॥
ज्येष्ठर्क्षभानुताराभ्यां युक्ताऽष्टम्यतिदुर्लभा ॥ ६४ ॥
जयन्त्याख्यं व्रतं भिन्नं कृष्णजन्माष्टमी व्रतात् ॥
शुद्धा च सप्तमीविद्धेत्येवं जन्माष्टमी द्विधा ॥ ६५ ॥
सप्तमीचेन्निशीथात् प्राग् विद्धा शुद्धान्यथा भवेत् ॥
शुद्धायां नास्ति संदेहो विद्धा च त्रिविधेष्यते ॥ ६६ ॥
निशीथयोगः पूर्वेद्युः परेद्युर्वोभयोरुत ॥
पूर्वैव प्रथमे पक्षे परैवोत्तरपक्षयोः ॥ ६७ ॥

अष्टमी रोहिणीयुक्ता जयन्ती सा चतुर्विधा ॥
शुद्धा शुद्धाधिकेत्येवं विद्धा विद्धाधिकेति च ॥ ६८ ॥
शुद्धायामपि विद्धायां न सम्भाव्योत्तरा तिथिः ॥
शुद्धाधिकायां योगश्चेदेकस्मिन् वा दिनद्वये ॥ ६९ ॥
नैकयोगेऽस्ति संदेहो द्वियोगे प्रथमं दिनम् ॥
सदा निशीथे पश्चाद्वेत्युत्तमो मध्यमोऽधमः ॥ ७० ॥
योगस्त्रिधापि पूर्वेद्युः संपूर्णत्वादुपोषणम् ॥
विद्धाधिकायामप्येकदिने योगे स गृह्यताम् ॥ ७१ ॥
द्वयोर्योगस्त्रिधा भिन्नो निशीथे वृत्तिभेदतः ॥
तद्वृत्तिर्दिन एकस्मिन्नुभयोर्नोभयोरिति ॥ ७२ ॥
एकस्मिँश्चेत्तद्दिनं स्यात् पक्षयोरन्त्ययोः परा ॥
बुधे सोमे जयन्ती चेद् वारे सति फलप्रदा ॥ ७३ ॥
तिथ्यर्क्षयोर्द्वयोरन्त उत्तमं पारणं भवेत् ॥
एकस्यान्ते मध्यमं स्यादुत्सवान्तेऽधमं स्मृतम् ॥ ७४ ॥
यस्मिन् वर्षे जयन्त्याख्यो योगो जन्माष्टमी तदा ।
अन्तर्भूता जयन्त्यां स्यादृक्षयोगप्रशस्तितः ॥ ७५ ॥
नवमी पूर्वविद्धैव पक्षयोरुभयोरपि ॥
मध्याह्ने रामनवमी पुनर्वसुसमन्विता ॥ ७६ ॥
ग्राह्या नैवाष्टमीयुक्ता सनक्षत्राऽपि वैष्णवैः ॥
कृष्णा पूर्वोत्तरा शुक्ला दशम्येवं व्यवस्थिता ॥ ७७ ॥
जयन्तीव्रतवन्नित्यं काम्यं चैकादशीव्रतम् ॥
अरुणोदयवेधोऽत्र वेधः सूर्योदये तथा ॥ ७८ ॥
उक्तौ द्वौ दशमीवेधौ वैष्णवस्मार्त्तयोः क्रमात् ॥
कलाकाष्ठादिवेधोऽपि ग्राह्योऽत्र त्रिमुहूर्तवत् ॥ ७९ ॥
वैखानसाद्यागमोक्तदीक्षां प्राप्तो हि वैष्णवः ॥

विद्धा त्याज्या वैष्णवेन शुद्धाऽप्याधिक्यसम्भवे ॥ ८० ॥
एकादशी द्वादशी वाधिका चेत् त्यज्यतां दिनम् ॥
पूर्वं ग्राह्यं तूत्तरं स्यादिति वैष्णवनिर्णयः ॥ ८१ ॥
एकादशी द्वादशी चेत्युभयं वर्धते यदा ॥
तदा पूर्वदिनं त्याज्यं स्मार्त्तैर्ग्राह्यं परं दिनम् ॥ ८२ ॥
एकादशीमात्रवृद्धौ गृहियत्योर्व्यवस्थितिः ॥
उपोष्या गृहिभिः पूर्वा यतिभिस्तूत्तरा तिथिः ॥ ८३ ॥
द्वादशीमात्रवृद्धौ तु शुद्धाविद्धे व्यवस्थिते ॥
शुद्धा पूर्वोत्तरा विद्धा स्मार्तनिर्णय ईदृशः ॥ ८४ ॥
श्रवणेन युता चेत् स्याद् द्वादशी सा हि वैष्णवैः ॥
स्मार्त्तैश्चोपोषणीया स्यात्त्यजेदेकादशीं तदा ॥ ८५ ॥
उपवासव्रतादन्यव्रते सार्द्धमुहूर्त्तकैः ॥
सप्तभिर्दशमीविद्धामेतामेकादशीं सजेत् ॥ ८६ ॥
द्वादशी पूर्वविद्धैव व्रतेषु निखिलेष्वपि ॥
शुक्लत्रयोदशी पूर्वा परा कृष्णा त्रयोदशी ॥ ८७ ॥
अलाभे साऽपि पूर्वैव पूर्वाऽनङ्गत्रयोदशी ॥
या शुक्ला गृह्यते पूर्वा गृह्यतां साऽऽपराह्णिकी ॥ ८८ ॥
चतुर्दश्युत्तरा शुक्ला पूर्वा कृष्णचतुर्दशी ॥
उदये त्रिमुहूर्त्ताऽपि ग्राह्याऽनन्तव्रते तिथिः ॥ ८९ ॥
शुक्लाऽपि रात्रियुक्ता स्याच्चैत्रश्रावणमासयोः ॥
शुक्ला सर्वापि पूर्वैव यदि स्यादापराह्णिकी ॥ ९० ॥
प्रदोषे वा निशीथे वा द्वयोर्वा याऽस्ति सा भवेत् ॥
शिवरात्रिव्रते तत्र द्वयोः सत्ता प्रशस्यते ॥ ९१ ॥
तदभावे निशीथैकव्याप्ताऽपि परिगृह्यताम् ॥
तस्याश्चासम्भवे ग्राह्या प्रदोषव्यापिनी तिथिः ॥ ९२ ॥

तिथ्यन्ते पारणं यामत्रयादर्वाक्समापने ॥
अन्यथा पारणं प्रातरन्यतिथ्युपवासतत् ॥ ९३ ॥
पूर्वविद्धैव सावित्रीव्रते पञ्चदशी तिथिः ॥
नाड्योऽष्टादश भूतस्य स्युश्चेत्तत्र परेऽहनि ॥
व्रतान्तराणि सर्वाणि परेऽहन्येव सर्वदा ॥ ९४ ॥
श्राद्धेऽपराह्णकालीनो दर्श आब्दिकवन्मतः ॥
दिनद्वयेऽप्येकदेशे वृत्तौ ग्राह्यो महत्त्वतः ॥ ९५ ॥
तुल्यत्वं चेदेकदेशे क्षये पूर्वोऽन्यथोत्तरः ॥
कृत्स्नव्याप्तौ द्वयोरह्नोरुत्तरस्तिथिवृद्धितः ॥ ९६ ॥
साग्न्यनग्निव्यवस्था स्यान्न स्याच्चेदपराह्णयोः ॥
पूर्वेद्युः साग्निकः कुर्यादुत्तरेद्युरनग्निकः ॥ ९७ ॥
पर्वप्रतिपदोः सन्धिर्मध्याऽह्ने वा ततः पुरा ॥
अन्वाधानं पूर्वदिने यागः सन्धिदिने भवेत् ॥
ऊर्ध्वं मध्याह्नतः सन्धावन्वाधानं तु तद्दिने ॥ ९८ ॥
इष्टिं परदिने कुर्यादन्यो वाजसनेयिनः ॥
यस्तु वाजसनेयी स्यात्तस्य सन्धिदिनात् पुरा ॥
न काप्यन्वाहितिः किन्तु सदा सन्धिदिने हि सा ॥ ९९ ॥
सन्धिश्चेत् सङ्गवादूर्ध्वं प्राक्पर्यावर्त्तनाद्रवेः ॥
सा पौर्णमासी विज्ञेया सद्यः कालविधौ तिथिः ॥ १०० ॥
वृद्धिः प्रतिपदो याऽस्ति तदर्द्धं पर्वणि क्षिपेत् ॥
क्षयस्यार्द्धं तथा हित्वा सन्धिर्निश्चीयतां सदा ॥ १०१ ॥
बौधायनमते दर्शश्राद्धं चेष्टिर्विशिष्यते ॥
द्वितीया त्रिमुहूर्ता चेत् प्रतिपद्यापराह्णिकी ॥ १०२ ॥
अन्वाधानं चतुर्दश्यां दर्शे स्वल्पेऽपि वर्त्तयेत् ॥
दर्शश्राद्धं तथा कार्यमिति बौधायनोऽब्रवीत् ॥ १०३ ॥

इष्ट्यादिविकृतिः सर्वा पर्वण्येवेति निर्णयः ॥
उत्तरार्द्धे कालभेदात् कर्मभेदोपदेशनम् ॥ १०४ ॥
यस्मिन्नस्तमियाद्भानुस्तन्नक्षत्रमुपोषणे ॥
मुख्यं तस्याऽसंभवे तु ग्रहीतव्यं निशीथयुक् ॥ १०५ ॥
उपवासे यदृक्षं स्यात्तद्धि नक्तैकभक्तयोः ॥
उदये त्रिमुहूर्त्तस्थं नक्षत्रं व्रतदानयोः ॥ १०६ ॥
दिनद्वये तथात्वे तु पूर्वं स्याद् बलवत्ततः ॥
श्रवणं तूत्तरं ग्राह्यमुपाकरणकर्मणि ॥ १०७ ॥
पित्र्ये तु तिथिवत् सर्वो नक्षत्रस्य विनिर्णयः ॥
पूर्वः स्यादुपवासादावुत्तरो व्रतदानयोः ॥ १०८ ॥
योगः श्राद्धे कर्मकालव्याप्तस्तु परिगृह्यताम् ॥
करणं यद्दिने तत्तु ग्राह्यं रात्रौ यदा तदा ॥ १०९ ॥
दिनद्वयैकभक्तायामुपवासः प्रसिद्ध्यति ॥
वारेषु संशयाभावाद् ग्रहीतव्यं यथास्थितम् ॥ ११० ॥
आसन्ननाड्यः संक्रान्तेः पुण्याः स्नानादिकर्मसु ॥
चरेषु कर्कटे पूर्वा मकरे विंशतिः पराः ॥ १११ ॥
वर्त्तमाने तुलामेषे नाड्यस्तूभयतो दश ॥
वृषभादौ स्थिरे पुण्याः प्राक्पश्चादपि षोडश ॥ ११२ ॥
मिथुनादौ द्विस्वभावे उत्तराः षष्ठिनाडिकाः ॥
अहःसंक्रमणे रात्रावनुष्ठाननिषेधतः ॥
उक्तौ कालौ व्यवस्थाप्यौ तद्वशात् पूर्वपश्चिमौ ॥ ११३ ॥
रात्रौ संक्रमणे भानोर्दिनार्द्धं स्नानदानयोः ॥
अर्द्धरात्रादधस्तस्मिन्मध्याह्नस्योपरि क्रिया ॥ ११४ ॥
ऊर्ध्वं संक्रमणे चोर्ध्वमुदयात् प्रहरद्वयम् ॥
पूर्णे चेदर्द्धरात्रे तु यदा संक्रमते रविः ॥ ११५ ॥

प्राहुर्दिनद्वयं पुण्यं मुक्त्वा मकरकर्कटौ ॥
कर्कटे मकरे रात्रावप्याचारादनुष्ठितः ॥ ११६ ॥
पूर्णिमाप्रतिपत्सन्धौ राहुः सम्पूर्णमण्डलम् ॥
ग्रसते चन्द्रमर्कं च पर्वप्रतिपदन्तरे ॥ ११७ ॥
ग्रस्यमाने भवेत् स्नानं ग्रस्ते होमो विधीयते ॥
मुच्यमाने भवेद्दानं मुक्ते स्नानं विधीयते ॥ ११८ ॥
सूर्यग्रहे तु नाश्नीयात् पूर्वं यामचतुष्टयम् ॥
चन्द्रग्रहे तु यामाँस्त्रीन् बालवृद्धातुरैर्विना ॥ ११९ ॥
अपराह्णे न मध्याह्ने मध्याह्ने न तु सङ्गवे ॥
भुञ्जीत सङ्गवे चेत् स्यान्न पूर्वं भुजिमाचरेत् ॥ १२० ॥
ग्रस्तोदये विधोः पूर्वं नाहर्भोजनमाचरेत् ॥
ग्रस्तावेवास्तमानं च रवीन्दू प्राप्नुतो यदि ॥
तयोः परेद्युरुदये स्नात्वाऽभ्यवहरेन्नरः ॥ १२१ ॥
त्रयोदशादितो वर्ज्यं दिनानां नवकं ध्रुवम् ॥
मङ्गलेषु समस्तेषु ग्रहणे चन्द्रसूर्ययोः ॥ १२२ ॥
द्वादश्यादिस्तृतीयान्तो वेध इन्दुग्रहे स्मृतः ॥
एकादश्यादिकः सौरे चतुर्थ्यन्तः प्रकीर्तितः ॥
खण्डग्रहे तयोः प्रोक्तमुभयत्र दिनद्वयम् ॥ १२३ ॥
नित्ये नैमित्तिके जप्ये होमयज्ञक्रियासु च ॥
उपाकर्मणि चोत्सर्गे ग्रहदोषो न विद्यते ॥
तमेव निर्णयं शास्त्रन्यायाभ्यां कर्त्तुमुद्यमः ॥ १२४ ॥

ननु नायमुद्यमः सफलः । कालस्य गगनकुसुमायमानत्वात् । तदेतत् परमरहस्यम् अभिजानानः कपिलमहामुनिस्तत्त्वानि विवेक्तुकामः कालमुपेक्ष्यान्यान्येव पञ्चविंशतितत्त्वानि विविवेच—

मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त ।

षोडशकश्च विकारो न प्रकृतिर्न विकृतिः पुरुषः, इति ॥

नचैतेष्वेव तत्त्वेषु कालस्यान्तर्भावो मुनिना विवक्षित इति शङ्कनीयम्। त्वदभिमतस्य कालस्य यथोक्तपञ्चविंशतितत्त्वानां च परस्परमत्यन्तविलक्षणत्वात्। तथाहि। चिरक्षिप्रादिव्यवहारस्यासाधारणो हेतुः काल इति त्वदभिमतं काललक्षणम्। तत्त्वानां त्वन्यादृशानि लक्षणानि। सत्त्वरजस्तमोगुणानां साम्यावस्था मूलप्रकृतिः। महदहङ्कारपञ्चतन्मात्राख्यानां सप्तानां प्रकृतिविकृतीनां मध्येऽध्यवसायहेतुर्महत्तत्त्वम्। अभिमानहेतुरहङ्कारः। शब्दस्पर्शरूपरसगन्धात्मकानि पञ्च तन्मात्राणि। पृथिव्यादिपञ्चमहाभूतानाम् एकादशेन्द्रियाणां च षोडशविकाराणां लक्षणानि प्रसिद्धानि। अप्रकृतिरविकृतिः पुरुषश्चिदात्मकः। न ह्येवँल्लक्षणकेषु तत्त्वेषु कालस्यान्तर्भावः सम्भाव्यते। नापि षड्विंशतत्त्वान्तरं मुनिरनुमन्यते। कथं तर्हि मुनिप्रणीतानि तत्त्वानि आर्याभिः संगृह्णान ईश्वरकृष्णो बहिःकरणान्तःकरणे विविञ्चन् कालं व्यवजहार— साम्प्रतकालं बाह्यं त्रिकालमाभ्यन्तरं करणमिति। परप्रसिद्ध्या परो बोधनीय इति न्यायेनायं व्यवहारो, न तु स्वसिद्धान्ताभिप्रायेणेति वदामः। अत एवैतद्वचनं व्याचक्षणा वाचस्पतिमिश्रास्तत्त्वकौमुद्यामेवमाहुः। कालस्तु वैशेषिकाभिमत एकोऽतीतानागतादिभेदं प्रवर्तयितुमर्हति। तस्मादयं यैरुपाधिभेदैरतीतानागतादिभेदभाक् प्रतिपद्यते, सन्तु त एवोपाधयो व्यवहारहेतवः, कृतमन्तर्गडुना कालेनेति सांख्याचार्याः। तस्मान्न कालरूपतत्त्वान्तराभ्युपगम इति। अथोच्येत— भूतकालो, वर्त्तमानकालो, भविष्यत्काल इत्येवं त्रिष्वपि भूतादिष्वनुगतः कालप्रत्यय एकमनुगतं कालतत्त्वमन्तरेणानुपपन्न इति। तन्न। पदार्थप्रत्ययवदुपपत्तेः। यथा भवन्मते द्रव्यपदार्थो गुणपदार्थ इति षट्स्वु भावेषु

चतुर्ष्वभावेष्वपि अनुगतः पदार्थप्रत्यय एकमनुगतं पदार्थशब्दवाच्यमन्तरेणाप्युपपन्नः, तथा कालप्रत्ययः कुतो नोपपद्यते । तस्मान्निस्तत्त्वं कालं निर्णेतुं महानयमुद्यमः प्रेक्षावच्छिरोमणेर्माधवाऽऽचार्यस्य न कथञ्चिदप्युपपन्न इत्येवं प्राप्ते ब्रूमः । आयुष्मतश्चेत्तस्यैवं निरूढकालतत्त्वे यः प्रद्वेषः स कस्य हेतोरिति वक्तव्यम् । किं कपिलमहामुनिना निराकृतत्वात् किं वा सांख्यशास्त्रप्रणीतेषु तत्त्वेष्वसंगृहीतत्वाद्, उत लक्षणाभावाद्, आहोस्वित् प्रमाणाभावाद्, अथवा प्रयोजनाभावाद्, अथवा तत्त्वगतपञ्चविंशतितत्त्वसंख्याभ्यासपाटवेनावसिताच्छ्रद्धाजाड्यात्। न प्रथमः । कालनिराकरणसूत्रस्य मुनिना प्रणीतस्यानुपलम्भात्। न द्वितीयः । अतिप्रसङ्गात् । ऋग्वेदादिप्रोक्तानां ज्योतिष्टोमादीनाम्, आयुर्वेदधनुर्वेदगान्धर्वप्रोक्तानामौषधशस्त्रस्वरादीनां चासंगृहीतत्वेन तेष्वपि भवतः प्रद्वेषः केनवार्यते। अथतेषांविशिष्यासंग्रहेऽपि सुखदुःखमोहात्मकत्वेन गुणत्रयान्तर्भावादस्त्येवार्थात् संग्रह इत्युच्यते ।तर्हि कालस्याप्यसौ नदण्डवारित इति बुद्धिं समाधत्स्व । कालस्य गुणत्रयपरिणामत्वे सावयवत्वमनित्यत्वं घटादेरिव प्रसज्ज्येतेति चेद्, नित्यनिरवयवकालतत्त्वाभिनिवेशवतो वैशेषिकादेः पतत्वयं वज्रप्रहारः शिरसि । वेदवादिनां तु न काऽपि क्षतिः । कालस्योत्पत्तिसावयवत्वयोः प्रत्यक्षश्रुत्यावुपलभ्यमानत्वात् । तैत्तिरीयशाखायां नारायणीये कालोत्पत्तिराम्नायते । सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि ॥ कला मुहूर्ताः काष्ठाश्चाहोरात्राश्च सर्वशः ॥ अर्धमासा मासा ऋतवः संवत्सराश्च कल्पन्तामिति तस्यामेव शाखायाम् अरुणकेतुकचयनब्राह्मणे सावयवत्वं श्रूयते । उक्तो वेषो वासांसि च कालावयवानामितः प्रतीच्येष्विति॥इतोऽस्मादनुवाकात् प्रतीच्येष्वधस्तनेषु अनुवाकेषु कालाऽवयवानाम् ऋतूनां ध्यातव्यो वेष

उक्तः, वस्त्राणि चोक्तानीत्यर्थः । नित्यत्वनिरवयवत्वाऽभिधायिनो वैशेषिकादिशास्त्रस्य अमृता देवता इतिवदापेक्षिकनित्यतायाम् अन्तर्द्धानशक्त्युपेतयक्षराक्षसादिवत् संस्पर्शयोग्यावयवशून्यतायाञ्च तात्पर्यं वर्णनीयम्। एवञ्च सति विरोधाधिकरणन्यायोऽत्रानुगृहीतो भवति।तस्य च न्यायस्य संग्राहकावेतौ श्लोकौ—औदुम्बरी वेष्टितव्या सर्वेत्येषा स्मृतिर्मितिः * अमितिर्वेति सन्देहे मितिः स्यादष्टकादि-वत् ॥ औदुम्बरीं स्पृशन् गायेदिति प्रत्यक्षवेदतः । विरोधान्मूल-वेदस्याऽननुमानादमानतेति ॥ अयमर्थः । अध्वरे महावेद्यां सदो-नामकस्य मण्डपस्य मध्ये काचिदुदुम्बरशाखा स्तम्भत्वेन निखा-ता भवति । तामुद्दिश्य वस्त्रवेष्टनं स्मर्यते । औदुम्बरी सर्वा वेष्टयि-तव्येति । तत्र संशयः । एषा स्मृतिः प्रमाणं, न वेति । तत्र पूर्वा-धिकरणे अष्टकाः कर्त्तव्या इत्यस्याः स्मृतेर्मूलवेदानुमापकत्वेन प्रामाण्यमुक्तम् । तेनैव न्यायेन सर्ववेष्टनस्मृतिः प्रमाणमिति पूर्वः पक्षः । औदुम्बरीं स्पृष्ट्वोद्गायेदिति प्रत्यक्षश्रुतौ स्पर्शो विधीयते। न चासौ सर्ववेष्टने सत्युपपद्यते । तथाच सर्ववेष्टनस्मृतिमूलभूत-वेदानुमानस्य प्रत्यक्षश्रुतिविरुद्धस्य कालात्ययापदिष्टत्वेन निर्मूला वेष्टनस्मृतिरप्रमाणमिति सिद्धान्त इति । अथ मन्यसे महता तपसा शिवमाराध्य तत्प्रसादलब्धसर्वज्ञत्वपदः कणादमहामुनिर्वेदतात्पर्यं सम्यग्वेत्तीति वेदस्यैव मन्दमतिप्रतीतादर्थादर्थान्तरं नेतव्यमिति । एवमपि यस्य प्रसादादयं सर्वज्ञतामलभत स एव शिवो मुख्यः सर्वज्ञ इति तन्मतानुसारेण कणादमतस्यैवान्यथा नयनमत्यन्तमु-चितम् । शिवो हि सर्वेष्वागमेषु षट्त्रिंशत्तत्त्वानि निरूपयन् कालतत्त्वस्योत्पत्तिमङ्गीचकार । निखिलशैवागमसारमार्याभिः संगृह्णानो भोजराजः शुद्धानि पञ्च तत्त्वानि शिवशक्तिसदा-शिवेश्वरविद्याख्यानि निर्दिश्येतराणि निर्दिशन्मायाकार्योक्तिपूर्व-

कमेव कालं निरादिक्षव । पुंसो जगतः कृतये मायातस्तत्त्वपञ्चकं भवति * कालो नियतिश्च तथा कला च विद्या च रागश्चेति । तानि मायासहितान्येकादश तत्त्वानि सांख्यप्रसिद्धपञ्चविंशति- तत्त्वानि चोद्दिश्य क्रमेण विवृण्वन्निदमाह । नानाविधशक्तिमयी सा जनयति कालतत्त्वमेवाऽऽदौ * भाविभवद्भूतमयं कलयति जगदेष कालोऽत इति तत्र टीकाकार इत्थं व्याचख्यौ । नन्वप कालो नैयायिकादिभिर्नित्योऽभ्युपगतोऽत आह । भाविभवद्भूत- मयमिति । भूतादिरूपेण त्रिविधत्वादचेतनत्वे सत्यनेकत्वेनास्या- ऽनित्यत्वं सिद्धमिति भावः । केन कार्येणास्य सिद्धिरत आह । कलयति जगदेष कालोऽत इति। चिरक्षिप्रादिप्रत्ययद्वारेण कलय- त्याक्षिपतीत्यर्थ इति । इत्थं प्रत्यक्षश्रुतिसहकृतैरागमैः कणाद- शास्त्रस्य बाधे सत्यप्युत्तरमीमांसागतद्वितीयाध्यायप्रथमाधिकरण- न्यायोऽनुगृह्यते । तस्य च न्यायसङ्ग्राहकौ श्लोकौ—सांख्यस्मृत्या- स्ति सङ्कोचो न वा वेदसमन्वये * धर्मे वेदः सावकाशः सङ्को- च्योऽनवकाशया ॥ प्रत्यक्षश्रुतिमूलाभिर्मन्वादिस्मृतिभिः स्मृतिः । अमूला कापिली बाध्या न सङ्कोचोऽनया तत इति । अयमर्थः । ऋग्वेदादिभिरग्निहोत्रादिधर्मो ब्रह्मणो जगत्कर्तृत्वं च प्रतीयते । सांख्यस्मृत्यादिस्तु प्रधानस्य जगत्कारणत्वं प्रतिपादयति । तत्र तया च स्मृत्या वेदस्य सङ्कोचोऽस्ति ? न वेति संशयः । स्मृते- र्जगत्कारणत्वमन्तरेण निरवकाशत्वात् प्राबल्यम् । वेदस्य तु धर्मे- ऽपि चरितार्थत्वाद्दौर्बल्यम् । ततः स्मृत्यऽनुसारेण वेदः सङ्कुचित इति पूर्वः पक्षः । प्रत्यक्षश्रुतिभिर्बह्वीभिरनुगृहीता बह्व्यो मन्वादि- स्मृतयो ब्रह्मणः कारणतामाचक्षते । सांख्यस्मृतिस्त्वेका मूल- हीना चेति दुर्बलत्वात् सैव बाध्या । अतो नास्ति वेदस्य सङ्कोच इति राद्धान्त इति । अथ तार्किकत्वाभिमानग्रहगृहीतः सन् पर-

पक्ष एवं ब्रूवे । भूतादीनामौपाधिकानां कालविशेषाणामेवोत्पत्तिर्न तु निरुपाधिकस्य मुख्यकालस्येति । तर्हि कपर्दकान्वेषणाय प्रवृत्तश्चिन्तामणिमलभतेत्यस्य वासिष्ठरामायणप्रोक्तस्याभाणकस्य त्वमेव विषयोऽभूः । यतः साधर्म्यवैधर्म्यज्ञानाय द्रव्याण्यन्विच्छन् परब्रह्मतत्त्वमवागमः । व्यवहारहेतूनां भूतादिकालविशेषाणामाधारः स्वयं व्यवहारातीतो नित्यो निरवयवो मुख्यः कालो यः स परमात्मैव । तथाच श्वेताश्वतरा आमनन्ति । कालकालो गुणी सर्वविद्य इति । आस्तां नित्यत्वाऽनित्यत्वसाऽवयवत्वनिरवयवत्वचिन्ता । सर्वथाऽप्यस्ति सांख्यतन्त्रेष्वार्थिकः कालसंग्रहः । साक्षात्संग्रहाभावस्तु ज्योतिष्टोमादिवत् प्रकृतिपुरुषविवेकानुपयोगादित्यवगन्तव्यम् । तृतीयचतुर्थपक्षौ तु भवतो वैशेषिकपरिचयगन्धोऽपि नास्तीति प्रकटयतः । वैशेषिकग्रन्थेषु सर्वेष्वपि कालप्रकरणे तल्लक्षणस्य तत्साधकाऽनुमानस्य च प्रपञ्चितत्वात् । प्रमाणान्तराणि तु कालसाधकानि श्रुत्यैवोपन्यस्तानि । तथाच तैत्तिरीया अरुणकेतुके मन्त्रमामनन्ति । स्मृतिः प्रत्यक्षमैतिह्यमनुमानश्चतुष्टयम् । एतैरादित्यमण्डलं सर्वैरेव विधास्यत इति । तत्र स्मृतिरनुमेयश्रुतिमूलं मन्वादिशास्त्रम् । प्रत्यक्षं श्रोत्रग्राह्योऽकृत्रिमो वेदाख्योऽक्षरराशिर्योगिप्रत्यक्षमौपनिषदाभिमतं साक्षिप्रत्यक्षं वा । ऐतिह्यमितिहासपुराणादिकम् । ज्योतिःशास्त्रस्याप्यत्रान्तर्भावो द्रष्टव्यः । अनुमीयते स्वमूलभूतस्मृतिवाक्यमनेनेत्यनुमानः शिष्टाचारः । तस्य च स्मृत्यनुमापकत्वमाचार्यैर्विस्पष्टमभिहितम् । आचाराच्च स्मृतिं ज्ञात्वा स्मृतेश्च श्रुतिकल्पनमिति । तदेवं स्मृत्यादीनां चतुष्टयं सम्पन्नम् । एतैश्चतुर्भिः सर्वैरप्यादित्यमण्डलं प्रमीयत इति मन्त्रस्यार्थः । ननु स्मृत्यादीनि मण्डले साधकत्वेनात्रोपन्यस्तानि, न तु कालसाधकत्वेनेतिचेन्मैवम् ।

मण्डलस्य सार्वजनीनप्रत्यक्षसिद्धत्वेन तत्र स्मृत्याद्यनुपयोगात् । कालविवक्षयैवात्र कालनिर्वाहके मण्डले तान्युपन्यस्तानि । तथाच मण्डलद्वारा कालस्तैः प्रमीयते । कालविवक्षा चोत्तरमन्त्रेष्वतिस्फुटा । तत्रानन्तरो मन्त्र एवमाम्नायते । सूर्यो मरीचिमादत्ते सर्वस्माद् भुवनादधि * तस्याः पाकविशेषण स्मृतं कालविशेषणमिति । तस्यायमर्थः । भुवनगतं सर्वभूतजालमधिकृत्य रसवीर्यविपाकादिभिस्तत्तदनुग्रहसमर्थं मरीचिं सूर्यः स्वीकरोति । तत्कृतेन च भूतपाकविभेदेन निमेषादिपरार्द्धपर्यन्तः कालविभेदोऽस्माभिरवगतो भवतीति । कालप्रतिपादकानि च स्मृत्यादीनि उदाहरामः । तत्र मनुः, कालं कालविभक्तिं चेति सृष्टिप्रकरणे कालं व्यवजहार । याज्ञवल्क्योऽपि, श्राद्धकालाः प्रकीर्त्तिता इति । एवमन्यास्वपि स्मृतिषूदाहार्यं श्रुतिष्वपि । कृतं यत्स्वर्ग्यं विचिनोति काले इति बह्वृचाः । अहमेव कालो, नाहं कालस्येति तैत्तिरीयकाः । का च सन्ध्या कश्च सन्ध्यायाः काल इति सामगाः योगशास्त्रेऽपि संयमविशेषाद् धारणाध्यानसमाधित्रयरूपाद् योगिनोऽतीतादिकालं प्रत्यक्षतः पश्यन्तीत्यभिहितम् । तथाच पातञ्जलसूत्रं, परिणामत्रयसंयमाद् अतीताऽनागतादिज्ञानमिति ।

साक्षिप्रत्यक्षमपि, अहमस्मिन् काले निवसामीत्यनुभवस्तावत् सर्वजनीनः । नचासौ बाह्येन्द्रियकृतः । कालस्य रूपादिहीनत्वात् । नाऽपि मानसः । तार्किकैस्तदनङ्गीकारात् । नाप्यनुमानादिजन्यः । अपरोक्षप्रत्ययत्वात् । अतः सामग्र्यभावेऽपि अपरोक्षदर्शनात् साक्षिप्रत्यक्षमेतदित्यौपनिषदा मन्यन्ते । इतिहासेऽपि महाभारते पठ्यते, प्रहरौ घटिकान्यूनौ प्रहरौ घटिकाधिकौ * स कालः कुतपो ज्ञेयः पितॄणां दत्तमक्षयमिति । पुराणेऽपि, अनादिरेष भगवान् कालोऽनन्तोऽजरः पर इति ॥ शिष्टाश्च पौर्णमासाख्ये

काले अह्निनैवुकसंज्ञकान् स्वस्वकुलोचितान् देवताविशेषेभ्यः क्षीरदध्यादिसमर्पणादिकान् धर्मविशेषान् भानुवारादिकालविशेषे समाचरन्ति। तदेवमनेकप्रमाणप्रमिते काले प्रमाणाभावरूपश्चतुर्थपक्षः कथमाशङ्क्यते। नापि प्रयोजनाभावादिति पञ्चमः पक्षो युज्यते। तार्किकैस्तावत् सर्वोत्पत्तिमन्निमित्तकारणत्वमुद्घोषितम्। लोके च कृष्याद्युपयोगः कालविशेषस्य कृषीवलादिभिर्व्यवह्रियते। गृहप्रवेशप्रयाणाद्युपयोगोऽपि ज्योतिःशास्त्रप्रसिद्धः। श्रौतस्मार्त्तकर्मोपयोगस्तु प्रदर्शयिष्यते। तस्माच्छ्रद्धाजाड्यकृतस्तव प्रद्वेष इत्ययं षष्ठः पक्षः परिशिष्यते। तथाच पापात्मनस्तव बुद्ध्यपराधं पुण्यात्मनि माधवाचार्ये समारोपयन् कया वा शिक्षया न दण्ड्योऽसि। तदेवं कालस्य प्रत्याख्यातुमशक्यत्वात्तन्निर्णयोद्यमः सफल इति सुस्थितम्॥ ननु कतरः कालोऽत्र निर्णीयते। किं केवलकालः, उत कालकालः? ननु किमित्यप्रसिद्धया भीषया भीषयसि। न भीषयाम्यहम्। किन्तवस्त्येव कल्पितरूपभेदात् कालस्य द्वैविध्यं, येन प्राणिदेहादयोऽतीतवर्त्तमानादिरूपेण कल्पितव्याः स केवलः कालः। स च तत्त्वप्रकाशवचनेन पूर्वमुदाहृतः। कलयति जगदेष कालोऽत इति। स च वासिष्ठरामायणे दर्शितः— कालोऽपि कल्पते येनेति। श्रुतिश्च भवति। स विश्वकृद्विश्वविदात्मयोनिर्ज्ञः कालकालो गुणी सर्वविद्यः ॥ प्रधानं क्षेत्रज्ञपतिर्गुणेशः संसारमोक्षस्थितिबन्धहेतुरिति च। कूर्मपुराणेऽपि— अनादिरेष भगवान् कालोऽनन्तोऽजरः परः ॥ सर्वगत्वात् स्वतन्त्रत्वात् सर्वात्मत्वान्महेश्वरः। ब्रह्माणो बहवो रुद्रा अन्ये नारायणादयः। एको हि भगवानीशः कालः कविरिति स्मृतः। ब्रह्मनारायणेशानां त्रयाणां प्राकृतो लयः। प्रोच्यते कालयोगेन पुनरेव च सम्भवः। परं ब्रह्म च भूतानि

वासुदेवोऽपि शङ्करः । कालेनैव च सृज्यन्ते स एव ग्रसते पुनः । तस्मात् कालात्मकं विश्वं स एव परमेश्वर इति ॥ विष्णुधर्मोत्तरेऽपि, अनादिनिधनः कालो रुद्रः संकर्षणः स्मृतः ॥ कलनात् सर्वभूतानां स कालः परिकीर्त्तितः ॥ कर्षणात् सर्वभूतानां स तु सङ्कर्षणः स्मृतः । सर्वभूतशमित्वाच्च स रुद्रः परिकीर्त्तितः । अनादिनिधनत्वेन स महान् परमेश्वर इति । ज्योतिःशास्त्रेऽपि, भूतानामन्तकृत् कालः कालोऽन्यकलनात्मक इति । तत्रैवं सति द्वयोर्मध्ये कालकालोऽत्र तावन्न निर्णीतव्यः । तस्य धर्मानुष्ठाने अहेतुत्वादनुपादेयत्वाच्च । यस्त्वितरो मासपक्षतिथ्यादिरूपः सोऽपि ज्योतिःशास्त्र एव सम्यङ् निर्णीत इति कृतमनया कालनिर्णयप्रवृत्त्येति प्राप्ते, ब्रूमः । उभयमप्यत्र निर्णेतव्यम् । कालकालस्य जगदीश्वरस्य सर्वेषु कर्मारम्भेष्वनुस्मर्त्तव्यत्वात् । अत एव शिष्टाः पुण्याहवाचनादौ ईश्वरमनुस्मरन्ति । सर्वेषु कालेषु समस्तदेशेष्वशेषकार्येषु तथेश्वरेश्वरः ॥ सर्वैः स्वरूपैर्भगवाननादिमान् ममास्तु माङ्गल्यविवृद्धये हरिः ॥ यस्य स्मृत्या च नामोक्त्या तपोयज्ञक्रियादिषु । न्यूनं सम्पूर्णतां याति सद्यो वन्दे तमच्युतमिति । मासादिरूपभेदस्य तु स्वरूपेण निर्णीतत्वेऽपि श्रौतस्मार्त्तकर्मविशेषेण सह कालस्याङ्गाङ्गिभावो निर्णेतव्यः । यद्यप्यसौ हेमाद्रिप्रभृतिषु ग्रन्थेषु निर्णीतस्तथाप्यनेकत्र विप्रकीर्णस्यैकत्र संग्रहाय यत्नः क्रियते । तदेवं चिकीर्षितस्य कालरूपो विषयः संग्रहरूपं प्रयोजनं चास्तीत्ययं ग्रन्थ आरभ्यते । नित्यो जन्यश्च कालौ द्वौ तयोराद्यः परेश्वरः ॥ सोऽवाङ्मनसगम्योऽपि देही भक्तानुकम्पयेति नित्यकालस्य परमेश्वरत्वेऽपि प्रमाणं पूर्वमेवोपन्यस्तम् । परमेश्वरस्य चाऽवाङ्मनसगोचरत्वे सर्वे वेदान्तास्तदनुसारिस्मृतिपुराणानि तत्त्वविदनुभवश्च प्रमाणम् । भक्तानुग्राहिमूर्त्तिस्वीकार-

श्च तलवकाराख्ये सामवेदशाखाविशेषे कस्याश्चिदाख्यायिकाया-माम्नायते। तस्यां ह्याख्यायिकायाम् एवमुक्तम्—अग्निवाय्विन्द्रा-ऽऽदयो देवा ईश्वरानुगृहीताः सर्वत्र विजयमानाः स्वकीय-मेवैतत्सामर्थ्यमित्यभिमन्यन्ते स्म । तान् बोधयितुमवाङ्मनसगम्यं परमेव ब्रह्म पूज्यां चक्षुर्गम्यां काञ्चिन्मूर्त्तिं धारयित्वा प्रादुर्बभूव। तया सह वादं कृत्वाऽपि राजसचित्तावग्निवायू ब्रह्मतत्त्वं नैव बुबुधाते । इन्द्रस्तु सात्त्विकचित्तो बुबुध इति । वासिष्ठरामायणे-ऽपि शुक्रोपाख्याने । शुक्रं मृतमवलोक्य तत्पिता भृगुः क्रुद्धो मारयितारं कालं शप्तुमुद्यतः । तदानीं कालोऽनुग्रहीतुमीदृशेन रूपेणाविर्बभूवेति पठ्यते—

अथाकलितरूपोऽसौ कालः कवलितप्रजः * आदिभौतिकमास्थाय वपुर्मुनिमुपाययौ॥ खड्गपाशधरः श्रीमान् कुण्डली कवचान्वितः । ऋतुषट्कमयोदारवक्त्रषट्कसमाहितः ॥ मासद्वादशकोद्दामभुजद्वाद-शकोद्भटः। स्वाकारसमया बह्वया वृतः किङ्करसेनया ॥ स उपेत्य प्रणम्यादौ कुपितं तु महामुनिम्। कल्पक्षुब्धाब्धिगम्भीरं सान्त्व-पूर्वमुवाच ह ॥ त्वमत्यन्ततपा विप्र वयं नियतिपालकाः । तेन संपूज्यसे पूज्य साधो नेतरयेच्छया । मा तपः क्षपयानल्पं कल्प-कालमहानलैः । यो न दग्धोऽस्मि ते तस्य किं त्वं शापेन धक्ष्य-सि । संसाराऽऽवलयो ग्रस्ता निगीर्णा रुद्रकोटयः । भुक्तानि विष्णुवृन्दानि केन शक्ता वयं मुने । भोक्तारो हि वयं ब्रह्मन् भोजनं युष्मदादयः । स्वयं नियतिरेषा हि नावयोरेतदीहितमि-ति । न च भक्ताऽनुजिघृक्षया स्वीकृता मूर्त्तिरीदृश्येवेति कश्चि-न्नियमोऽस्ति।सर्वात्मकस्य परमेश्वरस्य भक्तचित्तप्रियायाः सर्वस्या अपि मूर्त्तेः स्वकीयत्वात् । अत एव भगवद्गीतायां, यो यो यां यां तनुं भक्तः श्रद्धयाऽर्चितुमिच्छति * तस्य तस्याऽचलां श्रद्धां

तामेव विदधाम्यहम् । स तया श्रद्धया युक्तस्तस्याराधनमीहते । लभते च ततः कामान् मयैव विहितान् हि तानिति । विष्णुरुद्रादिचेतनमूर्त्तिवदचेतनमूर्त्तयोऽपि तत्तत्फलविशेषार्थिभिरीश्वरत्वेनोपास्याः । तदेतदृग्वेदे समाम्नायते । एवं ह्येव बह्वृचा महत्युक्थे मीमांसन्त एतमग्नावध्वर्यव एतं महाव्रते छन्दोगा एतमस्यामेतं दिव्येतं वायावेतमाकाश एतमप्स्वेतमौषधीष्वेतं वनस्पतीष्वेतं चन्द्रमस्येतं नक्षत्रेष्वेतं सर्वेषु भूतेष्विति । वाजसनेयिनोऽपि मण्डलब्राह्मणे, तमेतमग्निमित्यध्वर्यव उपासत इत्यारभ्य पठन्ति, विषमिति सर्पाः सर्प इति सर्पविदः ऊर्गिति देवा रयिरिति मनुष्याः मायेत्यसुराः स्वधेति पितरो देवयजन इति देवयजनविदो रूपमिति गन्धर्वा गन्ध इत्यप्सरसस्तं यथा यथोपासते तदेव भवतीति । तैत्तरीयाश्च पठन्ति— क्षेम इति वाचि योगक्षेम इति प्राणापानयोरित्यादि । परब्रह्मारोपितं यद्यावज्जगद्रूपमस्ति तेन सर्वेणाप्युपासनाय परमेश्वरो रूपवान् भवतीति हिरण्मयाधिकरणमनोमयाधिकरणयोः प्रपञ्चितम् । एवञ्च सति यो यदा यत्कर्मारभते स तदा तत्कर्मोपयुक्तां कालात्मकस्येश्वरस्य मूर्त्तिमिष्टदेवतारूपेणानुस्मरेत् । अत एव मन्त्रशास्त्रेषु नानाविधानि ध्यानान्युपदिष्टानि । लोकेऽप्याविद्वदागोपालं सर्वेऽपि जना एकैकां देवतां स्वेच्छया पूजयन्ति । तदेतद्भगवानाह । यजन्ते सात्त्विका देवान् यक्षरक्षांसि राजसाः * प्रेतान् भूतगणांश्चान्ये यजन्ते तामसा जनाः । तस्मादारभ्यमाणकर्मफलप्रदो निजेष्टदेवतारूपो नित्यकालः कर्मारम्भेऽप्यनुस्मर्त्तव्य इति सिद्धम् ॥

अथ जन्यकालं निरूपयामः । ननु कालस्य जन्यत्वे सति कथं प्रलये कालव्यवहारः । प्रलयः कालः, प्रलयोऽतीतः, प्रलयो भावीति । कालनित्यत्ववादिनस्तवाऽपि समो दोषः । नित्यस्य

कालस्य तपनपरिस्पन्दाद्युपाधिभिः परिच्छेदे सत्येतावान् काल इति कालेयत्ता वर्णयितव्या । न च प्रलये तदुपाधयः सन्ति । अतस्तत्र कथं प्रलयकाले इयत्तानिर्णयः । अथ सत्कार्यवादाभ्युपगमेनोपाधयोऽपि वासनारूपेण सन्ति, तर्हि कालेऽपि तत्समानम् । न चैतावता निसत्त्वप्राप्तिः । उपाधिषु तदनङ्गीकारात् । अथ मन्यसे इयत्तारहितेऽपि प्रलयकाले सृष्टिकालेयत्तावासनावशादियत्ता व्यवह्रियते । तत्रोपाध्यायत्वादिर्दृष्टान्तः । यथा कश्चिन्माणवकस्त्रिंशद्वर्षवयस्कादध्येतुमुपक्रम्य संवत्सरमधीत्यास्मदुपाध्याय एकत्रिंशद्वर्षवयस्क इत्यध्ययनरहितेऽप्यतीते वयस्युपाध्यायत्वं व्यवहरति, तद्वदियत्ताव्यवहारः । एवं तर्ह्यनेन न्यायेन कालरहिते प्रलये कालव्यवहारः किं न स्यात् । कालरहितं च प्रलयादिकं वस्त्वस्तीति माण्डूक्यादिश्रुतयोऽभ्युपगच्छन्ति । तथाच श्रूयते । यच्चान्यत्त्रिकालातीतं तदप्योङ्कार एवेति । प्राभाकराश्च अपूर्वस्य कालत्रयासंस्पृष्टां काञ्चिदवस्थामाहुः । तस्मात्कालः सुखेन जन्यताम् । स च सामान्यविशेषाभ्यां द्विविधः । तस्य चोभयस्येश्वराख्याभिन्नात् कालादुत्पत्तिं मनुराह, कालं कालविभक्तिं च नक्षत्राणि ग्रहास्तथा * सृष्टिं ससर्ज चैवेमां स्रष्टुमिच्छन्निमाः प्रजा इति । तत्र यः सामान्यकालः स विशेषानुगतत्वात् तदपेक्षया नित्यो ग्रहगत्यादिभिरनुमेयो भूतोत्पत्तिनिमित्तकारणमिति तार्किकज्यौतिषिकादयः प्रतिपेदिरे । तत्र ज्योतिषा आहुः । प्रभवविरतिमध्यज्ञानवन्ध्या नितान्तं विदितपरमतत्त्वा यत्र ते योगिनोऽपि * तमहमिह निमित्तं विश्वजन्मात्ययानामनुमितमभिवन्दे भग्रहैः कालमीशम् । युगवर्षमासदिवसाः समं प्रवृत्तास्तु चैत्रशुक्लादेः * कालोऽयमनाद्यन्तो ग्रहभैरनुमीयते क्षेत्र इति कालविशेषेषु च संवत्सरः प्रधानभूतः । अन्ये तु सर्वे गुणभूताः

तथाचारुणकेतुके समाम्नायते । नदी च प्रभवा काचिदऽक्षया स्यन्दते यथा * तां नद्योऽभिसमायन्ति सोरुः सती न निवर्त्तते । एवं नानासमुत्थानाः कालाः संवत्सरं श्रिताः । अणुशश्च महशश्च सर्वे समवयन्ति तम् । स तैः सर्वैः समाविष्ट उरुः सन्न निवर्त्तत इति । अघमर्थः । भागीरथीगोदावर्यादिकानदीवाऽयं कालः कुतश्चिद् उत्पत्तिस्थानादुत्पद्यते । तच्चोत्पत्तिस्थानं सांख्योक्तप्रकृतिर्वा शैवागमोक्तमाया वा, श्रुतिस्मृत्युदितनित्यकालाऽऽत्मक ईश्वरो वा भविष्यति । यथा तां गङ्गादिकां नदीमन्या अल्पनद्यो अभितः प्रविशन्ति । सा च प्रविष्टैर्नद्यन्तरैः सह विस्तीर्णा प्रवहत्प्रवाहा सती न कदाचिच्छुष्यति । एवं नानाविधरूपैः समुत्पन्नाः कालभेदाः संवत्सराख्यं प्रधानं कालमाश्रिताः । तत्र निमेषाद्या अयनपर्यन्ताः कालभेदाः संवत्सरादणवः । युगाद्याः परार्द्धपर्यन्ताः संवत्सरान्महान्तस्ते सर्वे तं संवत्सरं सम्यक् प्रविशन्ति । अणूनामवयवत्वेन प्रवेशः । महतां तु संवत्सराऽऽवृत्तिनिष्पाद्यानामध्यक्षः संवत्सर इति तत्र प्रवेशोऽभिधीयते । तथाच वेदाङ्गे ज्योतिषग्रन्थे पठ्यते । पञ्चसंवत्सरमयं युगाध्यक्षं प्रजापतिम् * दिनर्त्वयनमासाऽङ्गं प्रणम्य शिरसा शुचिरिति । स च संवत्सरस्तैरणुभिर्महद्भिश्च सर्वैः समाविष्टोऽतिदीर्घः सन्नस्मिञ्जगति नोच्छिद्यत इति। नन्वल्पत्वं निमिषेपर्यवासितम् । महत्त्वं तु परार्द्धे । तथाच तयोरन्यतरस्य प्राधान्यमुचितम् । तत्र कथं संवत्सरस्य प्राधान्यमितिचेत् । ईश्वरेण प्रथमं सृष्टत्वादिति ब्रूमः । तथाच वाजसनेयिनः समामनन्ति । सोऽकामयत द्वितीयो मे आत्मा जायेतेति । स मनसा वाचा मिथुनं समभवत् तद्रेत आसीत् संवत्सरोऽभवदिति । तस्मात् संवत्सरं प्रधानम् । अत एव वयं संवत्सरमारभ्य कालविशेषं निर्णयामः

तत्र संवत्सरः । अयनमृतुर्मासः पक्षस्तिथिर्नक्षत्रमित्येवंविधाः कर्मकालाः । यद्यपि पुराणेषु मृत्युमार्कण्डेयादीनां युगाद्याकल्पादिपरिमितं तपः स्मर्यते, तथापि शतसंवत्सरायुषो मनुष्यानधिकृत्य धर्मशास्त्रप्रवृत्तेर्न युगादिनिर्णयोऽत्र उपयुक्तः । मनुष्याऽधिकारत्वं चास्माभिः पराशरस्मृतिव्याख्याने, मनुष्णां स्मृतं धर्ममित्यस्मिन् वचने प्रपञ्चितम् । ये तु, कलौ पञ्च विवर्जयेदित्यादयो मनुष्यधर्मास्तेष्वपि न युगादिकं निर्णेतव्यम् । संदेहाऽभावात् । नच शतायुषामधिकारे कथं सहस्रसंवत्सरसत्रश्रुतिरिति शङ्कनीयम् । तत्र संवत्सरशब्दो दिवसपर इति षष्ठाऽध्यायसप्तमपादे निर्णीतत्वात् । ये च संवत्सराऽऽवृत्तिसाध्या अनन्तव्रतादयस्तेष्वपि न संवत्सराधिकः काश्चित् कालो निर्णेतव्योऽस्ति । अतः संवत्सरमारभ्याऽर्वाञ्च एव निर्णेतव्याः कर्माङ्गकालाः । नच कालस्य कर्माङ्गत्वे विवदितव्यम् । सायं जुहोति प्रातर्जुहोतीति वाक्यादङ्गत्वप्रतीतेः । तत्र कर्मणस्तावदपूर्वविषयत्वात् प्राधान्यमभ्युपगन्तव्यम् । तथाच कालस्य गुणत्वेनान्वयः परिशिष्यते । अत एव गर्गः, तिथिनक्षत्रवारादिसाधनं पुण्यपापयोः * प्रधानगुणभावेन, स्वातन्त्र्येण न ते क्षमा इति । तस्मादङ्गभूतेषु निर्णयेषु कालेष्ववयवित्वेन संवत्सरस्याभ्यर्हितत्वादल्पवक्तव्यतया सूचीकटाहन्यायानुसाराच्च स एवादौ निर्णीयत इति स्थितम् ॥ इति माधवीये प्रकरणे उपोद्घातप्रकरणम् ॥ १ ॥

## अथ द्वितीयं प्रकरणम् ॥ २ ॥

संवत्सरो नामायनाद्यवयवयुक्तोऽवयवी कालविशेषः । सम्यग् वसन्त्यस्मिन्नयनर्त्तुमासादय इति व्युत्पत्तेः । स च द्वादशमासात्मकः । द्वादशमासाः संवत्सर इति श्रुतेः । मासानां तु चान्द्रसावनसौराख्येन दिवसभेदेन चान्द्रादित्रैविध्यं वक्ष्यते । मासत्रैविध्येन संवत्सरस्त्रिविधः । तदुक्तं ब्रह्मसिद्धान्ते । चान्द्रसावनसौराणां मासानां तु प्रभेदतः * चान्द्रसावनसौराः स्युस्त्रयः संवत्सरा अमीति ॥

तत्र चान्द्रः संवत्सरश्चैत्रशुक्लप्रतिपदादिः फाल्गुनदर्शान्तः । सौरस्तु मेषादिर्मीनान्तः । सावनः षष्ट्युत्तरशतत्रयाहोरात्रात्मकः । ते च त्रयः संवत्सराः केषुचित् कर्त्तव्येषु व्यवतिष्ठन्ते केषुचिच्च विकल्पन्ते । तथाच भविष्योत्तरपुराणे संवत्सरसाध्यं तिलकव्रतं पठ्यते । वसन्ते किंशुकाशोकशोभिते प्रतिपत्तिथिः * शुक्ला तस्यां प्रकुर्वीत स्नानं नियममास्थितः ॥ ललाटपट्टे तिलकं कुर्याच्चन्दनपङ्कजम् । ततः प्रभृत्यनुदिनं तिलकालङ्कृतं मुखम् ॥ धार्यं संवत्सरं यावच्छशिनेव नभस्तलमिति । तत्र संवत्सरश्चान्द्रोऽवगन्तव्यः । शुक्लपक्षप्रतिपत्तिथ्योस्तल्लिङ्गत्वात् । न हि शुक्लकृष्णपक्षौ प्रतिपदादितिथयश्च सौरसावनोपजीवनेन प्रवृत्ताः । यत्तु नव वर्षाणि पञ्च चेत्यादिसंवत्सरस्यानन्तव्रताद्यङ्गत्वं स्मर्यते तत्रापि चान्द्र एव संवत्सरः । शुक्लपक्षे च चतुर्दश्यामित्यादिलिङ्गात् । नच चैत्रप्रतिपदि तदुपक्रमाभावादचान्द्रत्वं शङ्कनीयम् । तदुपक्रमस्य संवत्सरस्य सृष्ट्यपेक्षत्वात् । अत एव ब्रह्मपुराणेऽभिहितं, चैत्रे मासि जगद् ब्रह्मा ससर्ज प्रथमेऽहनि * शुक्लपक्षे समग्रं तत्तदा सूर्योदये सति ॥ प्रवर्त्तयामास तदा कालस्य गणनामपि । ग्रहान्नागानृतून्मासान् वत्सरान् वत्सराधिपानिति ॥

चान्द्रसौरसावनशब्देषु तु प्रवृत्तिनिमित्तान्युच्यन्ते । चन्द्रकलावृद्धिक्षयप्रयुक्तप्रतिपदादितिथीनां षष्ट्यधिकशतत्रयेण निष्पन्नो यः स चान्द्रः । द्वादशराशिषु सूर्यसंक्रमणैर्निष्पन्नो यः स सौरः । सावनशब्दोऽहोरात्रोपलक्षकः । सोमयागे सवनत्रयस्याऽहोरात्रसंपाद्यत्वात् । तैश्च सावनैः षष्ट्यधिकशतत्रयसंख्याकैर्निष्पन्नो यः स सावनः । एवं सति वर्त्तमानभाद्रशुक्लचतुर्दशीमारभ्य आगामिभाद्रशुक्लचतुर्दश्याः प्राचीने तिथिसमुदाये चान्द्रसंवत्सरत्वमविरुद्धम् । यच्च निरूढपशुबन्धप्रकरणे श्रूयते । तेन संवत्सरे संवत्सरे यजेतेति पशुना संवत्सरो नातीयादिति च, तत्रापि चान्द्र एव द्रष्टव्यः । सर्वाँल्लोकान् पशुबन्धयाज्यभिजयति । तेन यक्ष्यमाणोऽमावास्यायां पौर्णमास्यां वेति कल्पसूत्रकारैश्चान्द्रतिथौ तदनुष्ठानविधानात् । सौरस्तु संवत्सरः सुजन्माऽवाप्तिव्रतादावुपयुज्यते । तच्च व्रतं विष्णुधर्मोत्तरे स्मर्यते । भगवन् कर्मणा केन तिर्यग्यानौ न जायते * म्लेच्छदेशे च पुरुषस्तन्ममाचक्ष्व भो मुने ॥ मार्कण्डेय उवाच ॥ मेषसंक्रमणे भानोः सोपवासो नरोत्तम । पूजयेद्भार्गवं देवं रामं शक्त्या यथाविधीत्यारभ्य, मीनसंक्रमणे मत्स्यं वासुदेवं च पूजयेदित्यन्तेन ग्रन्थेन व्रतं विधायान्ते तदुपसंहृतम् । कृत्वा व्रतं वत्सरमेतदिष्टं म्लेच्छेषु तिर्यक्षु न चाऽपि जन्मेति । तथा स्कन्दपुराणे धान्यदानव्रतं पठ्यते । अथातः सम्प्रवक्ष्यामि धान्यव्रतमनुत्तमम् * अयने विषुवे चैव स्नानं कृत्वा विचक्षण इत्यारभ्य व्रतं विधायैवमुपसंहृतम् । एवं संवत्सरे पूर्णे कुर्यादुद्यापनक्रियामिति ॥

सावनस्य सत्रादावुपयोगः । तदप्युक्तं विष्णुधर्मोत्तरे । सत्राण्युपास्यान्यथ सावनेन लोक्यं च यत् स्याद् व्यवहारकर्मेति । गोसत्रं वै संवत्सरो य एवं विद्वाँसः संवत्सरमुपयन्ति ऋध्नुव-

न्त्येवेति श्रुतौ गवामयनस्य सत्रस्य संवत्सरनाम्ना व्यवहारात् संवत्सरकालस्तदङ्गमिति प्रतीयते। तत्र सावनो ग्रहीतव्यः। चान्द्र-सौरयोर्मानयोस्तदनुष्ठानाऽसंभवात्। तथाहि। अहोरात्रसाध्य एकः सोमयागो वेदेष्वहःशब्देन अभिधीयते। तादृशानामहर्विशेषाणां गणः षडहः। स च द्विविधः, अभिप्लवः पृष्ठ्यश्चेति। तत्र चत्वारोऽभिप्लवाः षडहाः एकपृष्ठ्यः षडह इति षडहपञ्चकेन एको मासः संपद्यते। तादृशैर्द्वादशभिर्मासैः साध्यं संवत्सरसत्रम्। तथा च सावनेनैव तत्सिद्धिः। चान्द्रस्य षड्भिरहोरात्रैर्न्यूनत्वात्। सौरस्य सपादैः पञ्चभिरहोरात्रैरधिकत्वात्। ननु संवत्सराय दीक्षिष्यमाणा एकाष्टकायां दीक्षेरन्निति माघमासगतायाम् अष्टम्यां चान्द्रतिथौ सत्राय दीक्षा श्रूयते। ततश्चान्द्रेणैव संवत्सरेण भवितव्यम्। मैवम्। उक्तस्य दीक्षाकालस्य पूर्वपक्षरूपत्वात्। तन्निराकरणं हि श्रूयते। आर्त्तं वा एते संवत्सरस्याभिदीक्षन्ते य एकाऽष्टकायां दीक्षन्ते व्यस्तं वा एते संवत्सरस्याभिदीक्षन्ते य एकाऽष्टकायां दीक्षन्त इति। ननु पक्षान्तरमपि चान्द्रतिथिमेवोपजीव्य श्रूयते। फल्गुनीपूर्णमासे दीक्षेरन् मुखं वा एतत्संवत्सरस्य यत् फल्गुनीपूर्णमास इति। न। तस्यापि निराकृतत्वात्। तस्यैकैव निर्येति हि निराकृतम्। एकैव निर्या। एक एव दोष इत्यर्थः। ननु सिद्धान्तेऽप्येवं श्रूयते। चित्रापूर्णमासे दीक्षेरन् मुखं वा एतत्संवत्सरस्य यच्चित्रापूर्णमासो मुख्यत एव संवत्सरमारभ्य दीक्षते तस्य न काचन निर्या भवति। चतुरहे पुरस्तात् पौर्णमासे दीक्षेरन् तेषामेकाष्टकायां क्रयः संपद्यत इति। बाढम्। अस्त्वेवमङ्गभूते दीक्षोपक्रमे चान्द्रतिथ्युपजीवनं, तथापि प्रधानकर्मणि सावनग्रहे को बाधः। नन्वस्ति बाधः। तेषां पूर्वपक्षे सुत्या संपद्यत इति सुत्याख्ये प्रधानकर्मणि चान्द्रस्य शुक्लपक्षस्योपजीवनात्। उप-

जीव्यतां नाम शुक्लपक्षस्तथापि यथोक्तप्रकारेण कृत्स्नस्य प्रधान-कर्मणः सावनमन्तरेणानिर्वाहात् । स एवात्र गृह्यते । अयमेव न्याय उत्सर्गिणामयने कुण्डपायिनामयने तुरायणादौ च योज-नीयः । तेषां गोसत्रविकृतित्वात् । यत्र तु चान्द्रादिनियामकं नास्ति तत्रैच्छिको विकल्पः । तथाहि । पिप्पलादशाखायामार्थवणिक-भारद्वाजादीनां षण्मुनीनां विद्याधिकारसिद्धये गुरुणा पिप्पलादेन आदिष्टं सवत्सरं वा समामनन्ति । भूय एव तपसा ब्रह्म-चर्येण श्रद्धया वा संवत्सरं वत्स्यथ यथाकामं प्रश्नान् पृच्छ-तेति । बह्वृचास्त्वेतमेवार्थं व्यतिरेकमुखेन आमनन्ति । ता एताः संहिता नाऽनन्तेवासिने प्रब्रूयान्नाऽसंवत्सरवासिन इति । तैत्तिरी-याश्चारुणकेतुकमग्निं चेष्यमाणस्यादौ त्रिषवणस्नानादिरूपं व्रतमा-मनन्ति । संवत्सरमेतद् व्रतं चरेदिति । एवंविधेषु प्रदेशेषु निया-मकाभावाच्चान्द्रादीनामब्दानामन्यतम इच्छया ग्रहीतव्यः । ननु संवरस्य चान्द्रसौरसावनभेदेन त्रैविध्यमेवाङ्गीकृत्य तत्स्वरूपविनियो-गावुक्तौ । तत्रैवं त्रैविध्यानियमो न युक्तः । अन्ययोरपि नाक्षत्र-बार्हस्पत्ययोर्द्विविधयोः संवत्सरयोर्विद्यमानत्वात् । तथाह्यायुर्वेद-विदः पठन्ति । सौरबृहस्पतिसावनचान्द्रिकनाक्षत्रिकाः क्रमेण-स्युः * मातुलपातालातुलविमलवराङ्गाणि वत्सराः पञ्चेति । अस्यायमर्थः । गणकप्रसिद्ध्याऽक्षरसंख्यया मातुलशब्दः पञ्च-षष्ट्यधिकशतत्रयमाचष्टे । तावद्दिवसपरिमितः सौरसंवत्सरः । पातालशब्द एकषष्ट्यधिकशतत्रयमाचष्टे। तावद्दिवसपरिमितो बार्ह-स्पत्यसंवत्सरः । अतुलशब्दः षष्ट्यधिकशतत्रयमाचष्टे । तावद् दिवसपरिमितः सावनः संवत्सरः । विमलशब्दश्चतुष्पञ्चाशदधिक-शतत्रयमाचष्टे । तावद्दिवसपरिमितश्चान्द्रः। वराङ्गशब्दश्चतुर्विंशत्य-धिकशतत्रयमाह । तावद्दिवसपरिमितो नाक्षत्रकः संवत्सर इति ।

एवं तर्ह्यस्तु संवत्सरः पञ्चविधः। तत्र नाक्षत्रिकस्य ज्योतिःशास्त्रप्रसिद्धे आयुर्दायादावुपयोगो द्रष्टव्यः। बार्हस्पत्यस्तु सिंहबृहस्पत्यादिविशेषमुपजीव्य गोदावर्यादिस्नानादौ विनियुक्तः। अनेन बार्हस्पत्यमानेन कदाचिदधिसंवत्सरोऽपि निष्पद्यते। तदुक्तमुत्तरसौरे। गुरोर्मध्यमसंक्रान्तिहीनो यश्चान्द्रवत्सरः * अधिसंवत्सरस्तस्मिन् कारयेन्न सवव्रयम्। वर्ज्जनीया प्रयत्नेन प्रतिष्ठा सर्वनाकिनाम्। स्फुटसंक्रान्तिहीनश्चेत् केऽप्याहुरधिमासवदिति। मध्यमगणनाया गुरोः संक्रान्तिर्यस्मिँश्चान्द्रवत्सरे न विद्यते सोऽयमधिवत्सरः। तत्र बृहस्पतिसवादिकं न कार्यम्। स्फुटगणनया बृहस्पतिसंक्रान्तिरहितो यश्चान्द्रो वत्सरस्तस्मिन्नधिमासवत् काम्यादिकं वर्ज्यमिति केचिन्महर्षयो मन्यन्ते॥

अथ चान्द्रस्यावान्तरभेदा उच्यन्ते। संवत्सरः परिवत्सर इडावत्सरोऽनुवत्सर इद्वत्सरश्चेत्येते पञ्चभेदाः। तदेतत् सामान्याकारेण संवत्सरादिपञ्चविधत्वं सावित्रचयनगताग्निप्रशंसकमन्त्रे पठ्यते। संवत्सरोऽसि परिवत्सरोऽसि इदावत्सरोऽसि इद्वत्सरोऽसि इदुवत्सरोऽसीति। इदुवत्सरोऽनुवत्सर इत्यर्थः। अत एव चातुर्मास्यब्राह्मणे तदाधिष्ठानदेवतारूपत्वेनैवं श्रूयते। अग्निर्वा व संवत्सरः। आदित्यः परिवत्सरः। चन्द्रमा इदावत्सरः। वायुरनुवत्सरः। महेश्वर इद्वत्सर इति। ब्रह्मवैवर्त्तेऽपि। संवत्सरस्तु प्रथमो द्वितीयः परिवत्सरः * इदावत्सरस्तृतीयश्चतुर्थश्चानुवत्सरः। इद्वत्सरः पञ्चमस्तु तत्सङ्घो युगसंज्ञक इति। तेषां पञ्चानां विनियोगो विष्णुधर्मोत्तरे पठ्यते। संवत्सरे तु दातृणां तिलदानं महाफलम् * परिपूर्वे तथा दानं यवानां द्विजसत्तम॥ इदापूर्वे च वस्त्राणां धान्यानां चानुपूर्वके। इत्पूर्वे रजतस्यापि दानं चोक्तं महाफलमिति॥ तथा तदधिष्ठातृदेवतापूजारूपो व्रतविशेषः पठ्यते। संवत्सरः

स्मृतो वह्निस्तथार्कः परिवत्सरः॥इदापूर्वस्तथा सोमो ह्यनुपूर्वः प्रजापतिः । इत्पूर्वश्च तथा प्रोक्तो देवदेवो महेश्वरः । तेषां मण्डलविन्यासः प्राग्वदेव विधीयते ॥ प्राग्वत् स्यात् पूजनं कार्यं होमः कार्यो यथाविधीति । प्रभवमारभ्य क्षयान्तेषु षष्टिवर्षेषु द्वादशपञ्चकानि । तत्रैकैकस्मिन् वर्षपञ्चके एकैकक्रमेण संवत्सरादयो भवन्ति । तदेतत्सर्वं ज्योतिःशास्त्रादवगन्तव्यम् ॥ इति संवत्सरनिर्णयः ॥

अथाऽयनम् । अयते यात्यनेन ऋतुत्रयेण सूर्यो दक्षिणाऽऽशामुत्तराशां चेति ऋतुत्रयमयनम् । तथाच वाजसनेयिनः पञ्चाग्निविद्यायां दक्षिणोत्तरमार्गयोः समामनन्ति । यान् षण्मासान् दक्षिणादित्य एति यान् षण्मासानुदङ्ङादित्य एतीति । तथा छन्दोगा अप्यधीयते । यान् षड्दक्षिणेति मासांस्तान् यान् षडुदगेति मासांस्तानिति । तैत्तिरीया ऋतुग्रहब्राह्मणे पठन्ति । तस्मादादित्यः षण्मासान् दक्षिणेनेति षडुत्तरेणेति । एवञ्चादित्यगतिमुपजीव्यायननिष्पत्तेः सौरमेवैतत् । अत एव विष्णुधर्मोत्तरे सौरमानमधिकृत्य उक्तम्, ऋतुत्रयं चायनं स्यादिति । केचित्तु चान्द्रमानेनायनद्वयमभ्युपगच्छन्ति । मार्गमासादिकैस्त्रिभिर्ऋतुभिः कल्पितः कालः षण्मासात्मकमुत्तरायणम् । ज्येष्ठमासादिकैर्दक्षिणायनमिति । तत्र प्रमाणं ज्योतिःशास्त्रादौ मृग्यम् ॥ श्रौतस्मार्त्तकर्मानुष्ठाने तु मकरकर्कटसंक्रान्त्यादिक एवायनद्वयकाल इति तथोक्तश्रुतिस्मृतिभ्याम् अवगन्तव्यम् । उत्तरायणस्य यागकर्माङ्गत्वं काण्वा अधीयते । उदगयने आपूर्यमाणपक्षस्य पुण्याहे द्वादशाहमुपसद्व्रती भूत्वेत्यादि । चौलादीनामुत्तरायणकर्त्तव्यता गृह्यस्मृतिषु प्रसिद्धा । सत्यव्रतश्च देवताप्रतिष्ठादीनामुत्तरायणदक्षिणायनयोर्विधिनिषेधावाह । „देवताऽऽरामवाप्यादिप्रतिष्ठोदङ्मुखे

रवौ * दक्षिणाशामुखे कुर्वन्न तत्फलमवाप्नुयादिति । उग्रदेवतानां प्रतिष्ठा दक्षिणायने कर्त्तव्या । तथाच वैखानससंहितायामभिहितम्। मातृभैरववाराहनारसिंहत्रिविक्रमाः * महिषासुरहन्त्री च स्थाप्या वै दक्षिणायन इति । एवं विष्णुधर्मोत्तराभिहितानि पदद्वयव्रतान्ययनकर्त्तव्यान्युदाहार्य्याणि । इत्ययननिर्णयः॥

अथर्त्तवः । ऋतुशब्दः, ऋ गतावित्यस्माद्धातोर्निष्पन्नः। इयर्त्ति गच्छति अशोकपुष्पविकासादि असाधारणलिङ्गमिति वसन्तादिकालविशेष ऋतुः । स च षड्विधः। षड्वा ऋतव इति श्रुतेः । यत्तु द्वादशमासाः पञ्चर्त्तव इति श्रुतं तत्र हेमन्तशिशिरयोरेकीकरणं विवक्षितम्। याजमानेषु पञ्चप्रयाजानुमन्त्रणमन्त्रेषु हेमन्तशिशिरयोरेकस्मिन्नेकेनैव पदेनैकीकरणोक्तेः । तथाहि । वसन्तमृतूनां प्रीणामि । ग्रीष्ममृतूनां प्रीणामि । वर्षा ऋतूनां प्रीणामि । शरदमृतूनां प्रीणामि इति चतुर्णां प्रयाजानां पृथक् पृथगनुमन्त्रणमन्त्रानाम्नाय पञ्चमप्रयाजस्याऽनुमन्त्रणमन्त्र एवं श्रूयते । हेमन्तशिशिरावृतूनां प्रीणामीति। एतदेवाभिप्रेत्य बह्वृचब्राह्मणे द्वादशमासाः पञ्चर्त्तवो हेमन्तशिशिरयोः समासेनेति । यत्त्वनयोर्मन्त्रब्राह्मणयोर्द्विवचनं तद् स्वरूपद्वैविध्याऽभिप्रायेण । शिशिरस्य षष्ठस्यान्तिमत्वाद् । तेनानुमन्त्रणीयस्य षष्ठप्रयाजस्याभावाच्च । तस्यैव पञ्चमे हेमन्तेऽन्तर्भावो न्याय्यः । अत एव प्रयाजब्राह्मणे वसन्तमेवर्त्तूनामवरुन्धे इत्यादिना चतुरः प्रयाजान् प्रशस्य पञ्चमे प्रयाजे केवलेन हेमन्तेन प्रशंसा। स्वाहाकारं यजति हेमन्तमेवावरुन्धे इति । अस्तु नाम यथा तथा पञ्चसंख्या, यथोक्तस्वरूपेण तु षोढा भिद्यते । द्वादशमासात्मके संवत्सर एकैकस्य ऋतोर्मासद्वयात्मकत्वे सति एकादशद्वादशमासयोर्वर्जयितुमशक्यत्वाद् । षष्ठर्त्तौ पृथगनुष्ठानविधानाच्च । तच्चो-

परिष्टादुदाहरिष्यामः । मासद्वयात्मकत्वं चाग्निचयने ऋतव्येष्टकोपधानब्राह्मणे श्रूयते । द्वन्द्वमुपदधाति । तस्माद् द्वन्द्वम् ऋतव इति । एकस्मिन्नृतौ कयोर्मासयोर्द्वंद्वं ग्रहीतव्यमितिचेत् । वसन्ताद्यनुक्रमेण चैत्रमासादिद्वंद्वमिति ब्रूमः । तच्चेष्टकोपधानमन्त्रेषु श्रूयते । मधुश्च माधवश्च वासन्तिकावृतू । शुक्रश्च शुचिश्च ग्रैष्मावृतू । नभश्च नभस्यश्च वार्षिकावृतू । इषश्चोर्जश्च शारदावृतू । सहश्च सहस्यश्च हैमन्तिकावृतू । तपश्च तपस्यश्च शैशिरावृतू । एषु च वाक्येषु ऋतू इति द्विवचनम् ऋत्ववयवमासाभिप्रायम् । अन्यथा षड् ऋतव इति श्रूयमाणा षट्संख्या बाध्येत । अवयविन ऋतोर्वसन्तादेरेकात्मकत्वं सौत्रामणीयहौत्रमन्त्रेष्वेकवचनेन व्यवहारादवगन्तव्यम् । वसन्तेनर्त्तुना देवाः, ग्रीष्मेणर्त्तुना देवा इत्यादि हि तत्र पठ्यते । तथैवाधानब्राह्मणे श्रूयते । वसन्तो वै ब्राह्मणस्यर्तुर्ग्रीष्मो वै राजन्यस्यर्त्तुः शरद्वैश्यस्यर्त्तुरिति । यद्यप्येते षडर्त्तवो घटीयन्त्रघटवन्नैरन्तर्येणावर्त्तन्ते तथापि संवत्सरोपक्रमरूपत्वेन वसन्तस्य प्राथम्यं द्रष्टव्यम् । एतदेवाभिप्रेत्य श्रूयते । मुखं वा एतदृतूनां यद्वसन्त इति । पूर्वोदाहृतेषु मन्त्रब्राह्मणेषु सर्वत्र वसन्तोपक्रमपाठाच्च वसन्तस्य प्राथम्यम् । ते च वसन्ताद्यृतवो द्विविधाः । चान्द्राः सौराश्च । चैत्रादयश्चान्द्राः । तच्चोदाहृतं मधुश्च माधवश्चेत्यादिना । नच तत्र चैत्रादयो नोक्ता इति शङ्कनीयम् । मध्वादिशब्दानां चैत्रादिपर्यायत्वात् । अत एवाऽऽहुः । चैत्रो मासो मधुः प्रोक्तो वैशाखो माधवो भवेत् * ज्येष्ठमासस्तु शुक्रः स्यादाषाढः शुचिरुच्यते । नभोमासः श्रावणः स्यान्नभस्यो भाद्र उच्यते ॥ इषश्चाऽश्वयुजो मासः कार्त्तिकश्चोर्जसंज्ञकः । सहोमासो मार्गशिरः सहस्यः पुष्यनामकः । माघमासस्तपाः प्रोक्तस्तपस्यः फाल्गुनः स्मृत इति । एतेषां चैत्राद्यात्मकानां वसन्तादीनां चन्द्रगतिपरि-

वृद्धिं समाधिगच्छति । तदाश्रितमुहूर्त्तानां तदा वृद्धिः प्रजायते ॥ दिनवृद्धौ रात्रिहानिस्तद्धानिश्च यथा यथा । तदाश्रितमुहूर्त्तानां हानिर्ज्ञेया तथा तथा ॥ दक्षिणां च यदा काष्ठां क्रमादाक्रमते रविः । दिवसस्य तदा हानिर्ज्ञातव्या तावदेव तु ॥ क्षीयन्ते तस्य हानौ च तन्मुहूर्त्तास्तथैव च । रात्र्याश्रिताश्च वर्द्धन्ते रात्रिवृद्धिस्तथैव च ॥ यदा मेषं सहस्रांशुस्तुलां चैव प्रपद्यते । समरात्रन्दिवः कालो दिनशब्दस्य वाचक इति । वाचको वाच्यार्थ इति यावत् । अत्र ये मुहूर्त्ता अभिहितास्तेषां नामानि श्रुतिज्योतिःशास्त्रस्मृतिषु विविधानि दर्शितानि । तत्र श्रुतिं तावत् तैत्तिरीयाः पठन्ति । चित्रः केतुर्दाता प्रदाता सविता प्रसविता अभिशास्ताऽनुमन्तेति । एते अनुवाका मुहूर्त्तानां नामधेयानीति। अत्र द्वाभ्यां द्वाभ्यां पदाभ्यामेकैकस्यानुवाकस्य प्रतीकमुक्तम् । तथा सति चत्वारोऽनुवाकाः सम्पद्यन्ते । तत्र प्रथमे शुक्लपक्षगतस्याह्नो मुहूर्त्ताः । द्वितीये तद्रात्रेः । तृतीये कृष्णपक्षगतस्याह्नः। चतुर्थे तद्रात्रेरिति विवेकः । ते चाऽनुवाका एवं श्रूयन्ते "चित्रः केतुः प्रभानाभान् सम्भान् ज्योतिष्माँतेजस्वानातपस्तपन्नभितपन् रोचनो रोचमानः शोभनः शोभमानः कल्याणः । दाता प्रदाता नन्दो मोदःप्रमोदः अवेशयन्निवेशयन् संवेशनः सꣳशान्तः शान्तः आभवन् प्रभवन् सम्भवन् सम्भुतो भूतः । सविता प्रसविता दीप्तो दीपयन् दीप्यमानः।ज्वलन् ज्वलिता तपन् वितपत्सन्तपद्रोचनो रोचमानः।शुम्भूः शुम्भमानो वामः । अभिशास्ताऽनुमन्ता नन्दो मोदःप्रमोदआसादयन्निषादयन् संसादनः सꣳसन्नः सन्नः । आभूर्विभूः प्रभूः शम्भूर्भुव इति।एतेषु मुहूर्त्तेष्वेकैकमुहूर्त्तस्य पञ्चदशभागाः सूक्ष्ममुहूर्त्ताः । तथाच देवब्राह्मणे, इदानीं तदानीमिति । एते वै मुहूर्त्तानां मुहूर्त्ता इति । इदानीमित्यादिको-

ऽनुवाको मन्त्रकाण्ड एवं पठ्यते। इदानीं तदानीमेतर्हि क्षिप्रम्। अजिरम् आशु निमेषः फणोद्भवन् अतिद्रवन् त्वरं त्वरमाण आशुराशीयान् जव इति। ज्योतिःशास्त्रे तु अहोरात्रयोस्त्रिंशन्मुहूर्त्तानां नामानि कश्यपेन उक्तानि— गौरीवल्लभसर्पमित्रपितरो वस्वम्बुविश्वाह्वया ब्रह्मा।म्भोरुहसम्भवेन्दुहुतभुगुदेवेशानक्तञ्चराः ॥ तोयेशौर्यमयोनयो दश तथा पञ्च क्षणा वासरे ॥ रुद्राजाहिर्बुध्न्यपूषाऽश्विनाः स्युः कीनाशोऽग्निर्धातृचन्द्रादितीज्याविष्णुर्भानुस्त्वाष्ट्रवाता मुहूर्त्ताः रात्रौ क्रूरास्त्वन्तकाजाग्निरुद्रा इति ॥ स्मार्त्तानि तु नामानि पुराणे दर्शितानि। रौद्रः श्वेतश्च मैत्रश्च तथा सारभटः स्मृतः। सावित्रो वैश्वदेवश्च गान्धर्वः कुतपस्तथा ॥ रौहिणस्तिलकश्चैव विभवो निकृतस्तथा। शवरो विजयश्चैव भेदाः पञ्चदश स्मृता इति। एते पञ्चदश सूर्योदयादारभ्य क्रमाद्दिवामुहूर्त्ताः ॥ शङ्करश्चाजपादश्च तथाहिर्बुध्न्यमैत्रकौ। आश्विनौ याम्यवाह्नेयौ वैधात्रश्चान्द्र एव च ॥ आदितेयोऽथ जैवश्च वैष्णवः सौर एव च। ब्राह्मो नाभस्वतश्चैव मुहूर्त्ताः क्रमशो निशीति ॥ यथोक्तनानाविधनामकत्रिंशन्मुहूर्त्तोपेतस्य सावनाहोरात्रस्य यदहः पञ्चदशमुहूर्त्तात्मकं तस्याह्नो भागा अपराह्णसायाह्नप्रातरादयः। ते चाह्नो भागा मतभेदेन पञ्चधा विकल्पन्ते। द्विधा त्रेधा चतुर्द्धा पञ्चधा पञ्चदशधा चाहर्विभज्यत इति पञ्च मतभेदाः। अत्र द्विधा विभागः स्कन्दपुराणे दर्शितः। आवर्त्तनात्तु पूर्वाह्णो ह्यपराह्णस्ततः पर इति। एतदेवाभिप्रेत्य मनुराह। यथा चैवापरः पक्षः पूर्वपक्षाद् विशिष्यते। तथा श्राद्धस्य पूर्वाह्णादपराह्णो विशिष्यत इति ॥ त्रेधा विभागोऽपि स्कन्दपुराणे दर्शितः। ऊर्ध्वं सूर्योदयात् प्रोक्तं मुहूर्त्तानां तु पञ्चकम्। पूर्वाह्णः प्रथमः प्रोक्तो मध्याह्नस्तु ततः परः ॥ अपराह्णस्ततः प्रोक्तो मुहूर्त्तानां च पञ्चक इति ॥

शातातपोऽपि । तस्मादह्नस्तु पूर्वाह्ने देवा अशनमभ्यवहरन्ति मध्यन्दिने मनुष्या अपराह्ने पितर इति । एतमेव विभागमभिमेत्य सहस्रसंवत्सरसत्रब्राह्मणे आम्नायते । ऋग्भिः पूर्वाह्ने दिवि देव ईयते यजुर्वेदे तिष्ठति मध्य अह्नः । सामवेदेनास्तमिते महीयते वेदैरशून्यस्त्रिभिरेति सूर्य इति । श्रुत्यन्तरेऽपि । पूर्वाह्णो वै देवानां मध्यन्दिनो मनुष्याणामपराह्णः पितॄणामिति । चतुर्द्धा विभागमाह गोभिलः । पूर्वाह्णः प्रहरं सार्द्धं मध्याह्नः प्रहरं तथा । आतृतीयादपराह्णः सायाह्नश्च ततः पर इति ॥ पञ्चधा विभागं व्यास आह । मुहूर्त्तत्रितयं प्रातस्तावानेव तु सङ्गवः । मध्याह्नस्त्रिमुहूर्त्तः स्यादपराह्णोऽपि तादृशः ॥ सायाह्नस्त्रिमुहूर्त्तस्तु सर्वधर्मबहिष्कृत इति । वृद्धपराशरोऽपि, लेखादिसाद् प्रभृतयो मुहूर्त्तास्त्रय एव तु । प्रातस्तु स स्मृतः कालो भागश्चाह्नः स पञ्चमः ॥ सङ्गवास्त्रिमुहूर्त्तोऽथ मध्याह्नस्तत्समः स्मृतः । ततस्त्रयो मुहूर्त्ताश्चाथापराह्णो विधीयते ॥ पञ्चमोऽथ दिनांशो यः स सायाह्न इति स्मृत इति ॥ एतमेव विभागमभिमेत्य कश्चिमन्त्रः सङ्गवकालमवलम्ब्य व्यवजहार । मन्त्रं च बह्वृचा आश्विनसूक्ते आमनन्ति ॥ उतायातं सङ्गवे प्रातरह्नो मध्यन्दिन उदिता सूर्यस्य । दिवानक्तमवसा शन्तमेन नेदानीं पीतिरश्विना ततानेति ॥ अस्मिन्मन्त्रे प्रातःसङ्गवमध्यन्दिनानां संज्ञाभिर्व्याहृतत्वात् । अवशिष्टयोर्भागयोरप्येतत्त्रितयमुपलक्षणं द्रष्टव्यम् । तैत्तिरीयब्राह्मणे यथोक्तानां पञ्चानां प्रातरादीनां भागानां मध्यवर्त्तिषु चतुर्षु सन्धिष्वग्निष्टोमोक्थ्यषोडश्यतिरात्राख्यानां चतसृणां सोमसंस्थानां निर्माणं वक्तुं यथोक्तपञ्चभागाः साधिष्ठातृदेवाः समाम्नाताः । देवस्य सवितुः प्रातर्मित्रस्य सङ्गवः बृहस्पतेर्मध्यदिनं भर्गस्यापराह्णः वरुणस्य सायमिति । छन्दोगाश्च सप्तभक्त्युपेतसाम्न आदित्यात्मनोपासनं

वक्तुमादित्यस्य सम्बन्धिनः कालभेदान् विभज्य तेषां हिङ्कारादि-सप्तभक्तिरूपतां विवक्षव आमनन्ति । तस्य यत्पुरोदयात्स हिङ्कारः । अथ यत् प्रथमोदिते स प्रस्तावः । अथ यत् सङ्गववेलायां स आदिः । अथ यत् सम्प्रति मध्यन्दिने स उद्गीथः । अथ यदूर्ध्वं मध्यन्दिनात् प्रागपराह्णात्स प्रतिहारः । अथ यदूर्ध्वमपराह्णात् प्राग-स्तमयात्स उपद्रवः । अथ यत्प्रथमास्तमिते तन्निधनमिति । वाज-सनेयिनोऽप्येवमामनन्ति । आदित्यो वै सर्व ऋतवः । यदेवोदे-त्यथ वसन्तो यदा सङ्गवोऽथ ग्रीष्मो यदा मध्यन्दिनोऽथ वर्षा यदापराह्णोऽथ शरद्यदैवास्तमेत्यथ हेमन्त इति । पञ्चदशधा वि-भागः शङ्खेन दर्शितः। रौद्रश्चैत्रश्च मैत्रश्च तथा शालकटः स्मृतः ॥ सावित्रश्च जयन्तश्च गान्धर्वः कुतपस्तथा ॥ रौहिणश्च विरञ्चश्च विजयो नैर्ऋतस्तथा । महेन्द्रो वरुणश्चैव भेदाः पञ्चदश स्मृता इति ॥ तत्र पञ्चधा विभागपक्षस्य बहुश्रुतिस्मृतिषु दृष्टत्वात् प्रायेणैतमेव पक्षमाश्रित्य विधिनिषेधशास्त्राणि प्रवर्त्तन्ते । सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहेति प्रातरिति श्रुतौ प्रातःकालमुपजीव्य तत्कालीनस्य होमस्य मन्त्रविशेषोऽभिहितः । स्मृतावपि, सन्ध्यामुपास्य विधिवत् प्रातर्होमं समाचरेदिति होमाङ्गत्वेन प्रातःकाल आश्रितः। सङ्गवस्तु कात्यायनेन व्यवहृतः—सन्धिश्चेत् सङ्गवादूर्ध्वं प्राक् चेदावर्त्तना-द्रवेः । सा पौर्णमासी विज्ञेया सद्यस्कालविधौ तिथिरिति ॥ बौधायनेन मध्याह्नो व्यवहृतः, मध्याह्नव्यापिनी ग्राह्या एकभक्त-व्रते तिथिरिति । अमावास्यायामपराह्णे पिण्डपितृयज्ञेन चरन्ति इति श्रुत्या अपराह्णो व्यवहृतः । सायाह्नव्यवहारस्तु पूर्वमेव संमुखी नामेति वचनेनोदाहृतः । त्रेधा विभागस्तु सवनत्रय उपयुज्यते । यथोक्तेषु पञ्चसु कालेषु यानि विहितानि कर्माणि तानि दैव-पित्र्यरूपेण राशिद्वयं कृत्वा तयोर्गौणकालाभ्यनुज्ञानाय द्वेधा वि-

भागो दर्शितः। चतुर्द्धा विभागस्तु प्रकरणबलाद् गोभिलस्मृत्युक्त-
कर्मविशेषे द्रष्टव्यः। पञ्चदशधा विभागो मुहूर्त्तविशेषोपजीवनेन।
विधिनिषेधौ ज्योतिःशास्त्रे द्रष्टव्यौ। एवञ्च सति प्रकृते पञ्चस्वह्नो
भागेषु पञ्चमं सायाह्नभागं व्याप्य ततः पूर्वं चतुर्थमपराह्णभागं या
प्रतिपद् संस्पृशति तादृशी पूर्वविद्धोपवासे पूज्या। अत्र तिथीनां
वेधः पैठीनसिना दर्शितः, पक्षद्वयेऽपि तिथयस्तिथिं पूर्वां तथोत्तरा-
म्। त्रिभिर्मुहूर्तैर्विद्ध्यन्ति सामान्योऽयं विधिः स्मृत इति॥ पूर्वेद्यु-
रुदयानन्तरममावास्या त्रिमुहूर्त्ता चेद् सा प्रतिपदं विद्धयति।
परेद्युरस्तमयाद् प्राग् द्वितीया त्रिमुहूर्त्ता चेद् सापि पूर्वां प्रतिपदं
विद्ध्यति। एवमुभयतो विद्धयोर्दिनद्वयवर्त्तिन्योः प्रतिपदोर्मध्ये किं
पूर्वा ग्राह्या उतोत्तरेति विचार्यते। तत्र पूर्वाया ग्राह्यत्वं पैठीनसि-
स्कन्दव्यासा आहुः। तद्वचनानि पूर्वमुदाहृतानि। निगमेऽप्येवमेवो-
क्तं– युग्माग्नियुगभूतानां षण्मुन्योर्वसुरन्ध्रयोः। रुद्रेण द्वादशी
युक्ता चतुर्दश्या च पूर्णिमा॥ प्रतिपद्यप्यमावास्या तिथ्योर्युग्मं
महाफलम्। एतद्व्यस्तं महादोषं हन्ति पुण्यं पुराकृतमिति॥ युग्मं
द्वितीया। अग्निस्तृतीया। युगं चतुर्थी। भूतं पञ्चमी। षट् षष्ठी।
मुनिः सप्तमी। वसुरष्टमी। रन्ध्रं नवमी। रुद्र एकादशी। अत्र
युग्माग्न्यादिसप्तयुग्मेषु पूर्वतिथिरुत्तरविद्धा ग्राह्या। उत्तरा तु
पूर्वविद्धेत्युक्तं भवति। स्मृत्यन्तरेऽपि। एकादशी तथा षष्ठी
अमावास्या चतुर्थिका। उपोष्याः परसंयुक्ताः पराः पूर्वेण संयुता
इति। अन्यत्रापि, षष्ठ्यष्टमी अमावास्या कृष्णपक्षे त्रयोदशी।
एताः परयुताः पूज्याः पराः पूर्वेण संयुता इति। शिवशङ्कर-
गीतायाम्। एकादश्यष्टमी षष्ठी द्वितीया च चतुर्थिका। चतुर्दश्य-
प्यमावास्या उपोष्याः स्युः परान्विता इति॥ एतेषु सर्वेषु वचने-
षु प्रतिपदः पूर्वविद्धायाः पूज्यत्वं प्रतीयते। एतस्यैव पक्षस्या-

ऽनुग्राहक उत्तरविद्धाया निषेधो बृहद्वसिष्ठेन स्मर्यते, द्वितीया पञ्चमी वेधाद्दशमी च त्रयोदशी । चतुर्दशी चोपवासे हन्युः पूर्वोत्तरे तिथी इति ॥ द्वितीयादयः स्ववेधे पूर्वामुत्तरां च तिथिं हन्युरित्यभिधानादुत्तरा प्रतिपदुपवासे निषिद्धा भवति। आपस्तम्बस्तूत्तरविद्धायाः प्रतिपदः पूज्यत्वमाह। प्रतिपत् सद्द्वितीया स्याद् द्वितीया प्रतिपद्युतेति । भविष्योत्तरेऽप्ययमेव पाठः ॥

अत्रेदं चिन्त्यते । किमुत्तरविद्धापूज्यत्ववचनेन प्रतिपन्मात्रं विषयीक्रियते, किं वा प्रतिपद्विशेषः ? । यदा प्रतिपद्विशेषस्तदापि किमशुक्लपक्षगतत्वं, किं वाऽनुपोष्यत्वं, पूर्वदिने अनापराह्णिकत्वं वा, तत्रैवासायाह्निकत्वं वा, तत्रैवाऽपराह्णसायाह्नोभयाव्याप्तित्वं वा, बलिदिनेतरत्वं वा, शुक्लपक्षादिनिखिलप्रतियोगिराहित्यं वा ?। ननु सर्वत्र संशयः कोटिद्वयमवलम्बते । कोटिद्वयावलम्बी विमर्शः संशय इति हि तार्किकडिण्डिमः । अतो बहुपक्षोपन्यासो न युक्तः। नैवम् । प्राणाधिकरणवदुपपत्तेः । अस्त्युत्तरमीमांसायां प्रथमाऽध्यायप्रथमपादावसाने प्राणशब्दं विषयीकृत्य प्रवृत्तमधिकरणम् । तस्य च संग्राहकावेतौ श्लोकौ भवतः। प्राणोऽस्मीत्यत्र वाय्विन्द्रजीवब्रह्मसु संशयः * चतुर्णां लिङ्गसद्भावात् पूर्वपक्षस्त्वनैकिकः ॥ ब्रह्मणोऽनेकलिङ्गानि तानि सिद्धान्यनन्यथा । अन्येषामन्यथासिद्धेर्व्युत्पाद्यं ब्रह्म नेतर इति॥ अयमर्थः । कौषीतकिब्राह्मणे प्रतर्दनायोपसन्नायेन्द्र एवमुपदिदेश । प्राणोऽस्मि प्रज्ञात्मानं मामायुरमृतमित्युपास्स्वेति । तत्र संशयः । किं प्राणशब्देन उच्छ्वासनिःश्वासकारी वायुर्विवक्षितः, उतेन्द्रशब्दाद्यभिधेयः सहस्राक्षत्वाद्याकारवान् देवताविशेषः, आहोस्वित् कार्यकारणाऽध्यक्षो जीवः, अथवा परब्रह्मेति। सन्ति चात्र प्रकरणे पक्षचतुष्टयगमकानि चतुर्विधानि लिङ्गानि । इदं शरीरं प्रतिगृह्योत्थापयती-

ति प्राणवायोर्लिङ्गम् । अस्मीत्यहङ्कारवादो वक्तुरिन्द्राख्यदेवताविशेषस्य लिङ्गम् । न वाचं विजिज्ञासीत वक्तारं विद्यादित्यादिना श्रुतं वक्तृत्वादिकं जीवलिङ्गम् । आनन्दोऽजरोऽमृत इत्यादिकं ब्रह्मलिङ्गम् । चतुर्णां लिङ्गानां समबलत्वादिच्छया यत् किञ्चित् स्वीकर्तव्यमिति पूर्वः पक्षः । आनन्दत्वाजरत्वादीनां ब्रह्मलिङ्गानामनेकत्वात्तेषां च वाय्वादौ कथञ्चिदपि योजयितुमशक्यत्वाच्छरीरोत्थापनादीनां वाय्वादिलिङ्गानां तदुपाध्युपहिते ब्रह्मणि सुसम्पादत्वाद् ब्रह्मैवात्र प्राणशब्देन विवक्षितमिति राद्धान्त इति ॥ पूर्वमीमांसायामपि षष्ठाध्यायस्य सप्तमे पादे सहस्रसंवत्सराधिकरणस्य संशये पक्षा अष्टावुपन्यस्ताः । किमस्मिन् सत्रे दीर्घायुषां गन्धर्वादीनामधिकारः, उत रसायनेन सिद्धानां मनुष्याणाम्, अथ पितृपुत्रपौत्रादिपरम्परारूपस्य कुलस्याहोस्विदस्मादेव शास्त्रादत्र प्रवृत्तस्य सहस्रसंवत्सरमायुर्भविष्यति, किं वा सार्द्धद्विशतानां पुरुषाणामत्राऽधिकारः ? । अत्र संवत्सरोक्तिर्मासपरा वा द्वादशरात्रिपरा वा दिनपरा वेति ?। एवञ्च सति संशयस्य एककोटित्वं तार्किकैर्व्यावर्त्यते, न तु बहुकोटिकत्वम् । नन्वेवमपि यथोक्तानां पक्षाणां प्राणाधिकरणन्यायेन गमकानि लिङ्गानि वक्तव्यानीतिचेत् तान्युदाहरामः॥ द्वितीया प्रतिपद्युतेत्युक्ते सामान्यतः प्रतिपन्मात्रं प्रतीयते । युग्माग्निवाक्ये प्रतिपद्यप्यमावास्येति पूर्वदिनपूज्यत्वस्य शुक्लपक्षविषयत्वादितरस्य कृष्णपक्षविषयत्वम् । नचात्रामावास्याशब्दः पूर्णिमाया अप्युपलक्षणमिति शङ्कनीयम् । चतुर्दश्या च पूर्णिमेति पूर्णिमायाः पूर्वदिनेन सह युग्मत्वाभिधानात् । उदाहृतस्मृत्यन्तरेण, उपोष्याः परसंयुक्ताः पराः पूर्वेण संयुता इत्यमावास्यायुतायाः प्रतिपद उपोष्यत्वाभिधानाद् द्वितीयायुक्तायाः उपवासव्यतिरिक्तव्रतादिविषयत्वम् ।

उपोष्यशब्देन व्रतादीनामुपलक्षणमितिचेन्न। पूर्वाह्णो वै देवानामिति श्रुत्या व्रतादौ पूर्वाह्णस्य विहितत्वेनोत्तरदिनस्वीकारे कर्मकालव्याप्तिलाभात्। यस्मिन् काले तु यत्कर्म तत्कालव्यापिनी तिथिरिति हि कर्मकालव्याप्तिः स्मर्यते। नचोपवासेऽपि समानमेतदिति वाच्यम्। उपवासस्याहोरात्रसाध्यत्वेन खण्डतिथौ सम्पूर्णकर्मकालव्याप्त्यसंभवात् । व्याप्तिबाहुल्यं तु पूर्वविद्धायामेव भवति । अह्नोऽपरभागे कृत्स्नायां रात्रौ च तद्व्याप्तेः । उदये तूपवासस्येति स्मृत्या परेद्युरुपवासः प्राप्नोतीतिचेन्न । तस्याः सामान्यशास्त्रत्वेन प्रतिपदुपवासाभिधायिनो विशेषशास्त्राद् दुर्बलत्वात् । पैठीनसिस्कन्दव्यासैः पूर्वतिथावपराह्णव्यापितया सायाह्नव्यापितयोभयव्यापितया च पूज्यत्वाभिधाने सति तासामेव तिसृणां व्याप्तीनामभावे उत्तरातिथौ पक्षत्रयं सम्पद्यते । ननु पूर्वतिथावपराह्णव्याप्तौ सत्यां तत्रान्तरीयकतया सायाह्नव्याप्तेरवश्यम्भावित्वेन पृथक्तदभिधानं निरर्थकमितिचेत् । किमिदं केवलसायाह्नाभिधायिवाक्ये चोदयसि, किं वोभयाभिधायिवाक्ये ?। नाद्यः । यदादिनैवापराह्णव्याप्तिं सायाह्नमात्रं व्याप्यते तदापि पूर्वविद्धायाः पूज्यताया वक्तव्यत्वात् । द्वितीये वैश्वानरेष्टिन्यायेनावयुत्यानुवादो भविष्यति । स च न्याय उद्भिदादिपादे व्यवस्थितः काम्यकाण्डे श्रूयते । वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जाते यदष्टाकपालो भवति गायत्र्यैवैनं ब्रह्मवर्चसेन पुनाति । यन्नवकपालस्त्रिवृतैवास्मिंस्तेजो दधाति । यद्दशकपालो विराजैवास्मिन्नन्नाद्यं दधाति । यदेकादशकपालस्त्रिष्टुभैवास्मिन्निन्द्रियं दधातीति । अत्र द्वादशकपालेष्टौ ब्रह्मवर्चसादिफलविशेषाय अष्टकपालादिगुणविधिरिति पूर्वः पक्षः । उत्पत्तिशिष्टद्वादशकपालेनाऽवरोधे सत्युत्पन्नशिष्टानामष्टाकपालादीनामवकाशाभावाद् उपक्रमोपसंहारान्तर्गतत्वेन तेषां

विध्यन्तराभावाच्चाग्नयवैरष्टाकपालादिभिर्नान्तरीयकसिद्धैरवयविनो द्वादशकपालस्य स्तुतिरिति सिद्धान्तः। एवमत्रापि यदा सायाह्न-व्यापिन्यपि गृह्यते तदाऽपराह्णव्यापिन्या ग्रहणं किमु वक्तव्य-मिति नान्तरीयकसिद्धया सायाह्नव्याप्त्या अपराह्णव्याप्तिः प्रशस्य-ते। स्कन्दपुराणे बलिदिनाभिधानायाः शुक्लप्रतिपदः पूर्वविद्ध-त्वाभिधानादितरा सर्वा प्रतिपदुत्तरेत्येष पक्षः प्रतीयते। शुक्लपक्षो-पवासापराह्णसायाह्नबलिदिनानां पञ्चानां समूहस्य पूर्वतिथिप्र-योजकत्वे सप्तान्तिमः पक्ष उदेति। एवं बहुविधसंशये सति निर्णयं ब्रूमः। यद्यपि द्वितीया प्रतिपद्युतेत्यत्र न कोऽपि विशेषः पठ्यते तथाप्यशेषप्रतिपत्स्वीकारे युग्माग्न्यादीनि बहूनि वाक्यानि बाध्येरन्। न चान्तिमः पक्षो युक्तिसहः। तदा हि पूर्वविद्धायाः प्रयो-जकमेवं वक्तव्यम्। शुक्लपक्षसायाह्नापराह्णव्यापिनि बलिदिने उपवासः स पूर्वविद्धाया विषय इति। तच्च वक्तुं न शक्यते। बलिदिनत्वं निमित्तीकृत्य उपवासस्याविधेयत्वात्। पूजोत्सवादिक-मेव हि तत्र विहितम्। अतः समूहस्य प्रयोजकत्वाभावे शुक्ल-पक्षादिपञ्चस्वन्यतमस्य प्रयोजकत्वमभ्युपेयम्। तत्र किमिच्छया विकल्पः। आहोस्विदेकं प्रतिनियतमिति विचारे विकल्पस्तावन्न युज्यते। अष्टदोषग्रस्तत्वात्। तथाहि। यदा बल्युत्सवस्य प्रयो-जकत्वं स्वीक्रियते तदोपवासवाक्यस्य प्राप्तं प्रामाण्यं परित्यज्येत। अप्राप्तं चाप्रामाण्यं स्वीक्रियेत। पुनरपि यदा कदाचिदुपवास-प्रयोजकत्वस्वीकारे कल्पितमप्रामाण्यमपन्हूयेतानिराकृतं च प्रामा-ण्यमुज्जीव्येत। तदेवमुपवासवाक्ये चत्वारो दोषाः। अनेनैव न्यायेन बल्युत्सववाक्येऽपि यथोक्ताश्चत्वारो दोषा उत्प्रेक्षणीयाः। नचैवं व्रीहियवादावपि विकल्पो न स्यादिति वाच्यम्। अगत्या तत्र तदाश्रयणात्। तदाहुर्भट्टाचार्याः— एवमेषोऽष्टदोषोऽपि यद्

व्रीहियववाक्ययोः * विकल्प आश्रितस्तत्र गतिरन्या न विद्यते इति । प्रकृते तु गत्यन्तरसम्भवान्न विकल्पः । अतो विकल्पाऽसम्भवादेकस्यैव प्रतिनियतस्य स्वीकर्त्तव्यत्वे सति शुक्लपक्षस्यैव स्वीकरणं युक्ततरं मन्यामहे । तथा सति बह्वनुग्रहसिद्धेर्युग्मादिवाक्यं बलिदिनवाक्यमुपवासवाक्यं चेत्येतान्यनुगृह्यन्ते । न ह्येतानि कृष्णपक्षविषयतया कथञ्चिदपि योजयितुं शक्यन्ते । तदनुसारेण द्वितीयायुतत्वं कृष्णपक्षविषयत्वेन सङ्कोचनीयम् । तस्य सामान्यवचनत्वात् । इत्थं शुक्लकृष्णप्रतिपदोः क्रमेण पूर्वोत्तरविद्धतया व्यवस्थितौ सत्यां योऽयं द्वितीयायुक्तोपवासनिषेधः, असौ शुक्लपक्षविषयतया योजनीयः । यद्यप्यापराह्णिकवचनं शुक्लकृष्णपक्षद्वयसाधारणं प्रतिभासते तथापि शुक्लपक्षविषयत्वमेव तस्य न्याय्यम् । सांमुख्यमुपजीव्य प्रवृत्तत्वात् । कृष्णपक्षे द्वितीयायुतायाः प्रतिपदो विमुखत्वात् । नन्वेवं सति यदा शुक्लपक्षे सायाह्नमात्रं व्याप्नोति, न त्वपराह्णं तदानीमुत्तरातिथिः प्रसज्ज्येतेतिचेन्मैवम् । संमुखी नाम सायाह्नव्यापिनीति वचनेन तादृशे विषये पूर्वतिथेर्विधानात् । एवमपीषन्न्यूनसायाह्नव्याप्तौ शुक्लपक्षेऽपि परेद्युरेव प्रसज्ज्येतेतिचेत् प्रसज्ज्यतां नाम पूर्वतिथियुग्मवाक्याविषयत्वाभावात् । यदा प्रातरमावास्या त्रिमुहूर्त्ता ततोऽधिका वा, सायं च प्रतिपत्त्रिमुहूर्त्ता ततोऽधिका वा भवति । तादृश्या एवोभयतस्त्रिमुहूर्त्तवेधोपेतायास्तिथेस्तद्विषयत्वात् । नच त्रिमुहूर्त्तवेधः सर्वसाधारणो न प्रतिपद्विषय इति शङ्कनीयम् । विशेषवचनाभावे सामान्यस्य स्वीकर्त्तव्यत्वात् । द्वितीयायुक्तोपवासनिषेधस्तु, पूर्वेद्युः प्रतिपदस्त्रिमुहूर्त्तवेधे सति द्रष्टव्यः । सायाह्नव्याप्तिवचनेन त्रिमुहूर्त्तवेधोऽभिधीयते । आपराह्णिकवचने ततोऽधिकवेधः । तत्रोभयत्र शुक्लप्रतिपत्पूर्वैवोपोष्या । यदा कृष्णप्रतिपत्परेद्युरुदयादूर्ध्वं त्रिमुहूर्त्ता ततोऽधिका वा स्यात्तदा सैवो-

पोष्या। अन्यथा पूर्वेद्युरिति निर्णयः। व्यासवचने पूर्वविद्धायां शुक्लप्रतिपदि ये दैवपित्र्ये विहिते तयोर्दैवशब्देन प्रतिपन्निमित्त उपवासो बल्युत्सवश्चेत्युभयं विवक्षितम्। वचनान्तराभ्यां तयोः शृङ्गग्राहिकया विधानात्। एकादशी तथा षष्ठी अमावास्या चतुर्थिका। उपोष्याः परसंयुक्ताः पराः पूर्वेण संयुताः॥ श्रावणी दुर्गनवमी तथा दूर्वाऽष्टमी च या। पूर्वविद्धा तु कर्त्तव्या शिवरात्रिर्बलेर्दिनामिति॥

नन्वाश्वयुजमासे योऽयं नवरात्रोत्सवस्तदुपक्रमस्यापि पूर्वविद्धायां क्रियमाणत्वात् सोऽप्यत्र विवक्षणीय इतिचेन्न। तस्य नक्तव्रतत्वादेकभक्तनक्तप्रातिपदीष्टीनां दैवत्वेऽपि पृथङ्निर्णयस्य वक्ष्यमाणत्वात्। नच व्रतादीन्यपि च दैवादन्यत्र विवक्ष्यन्तामिति शङ्कनीयम्। तेषु उदयतिथिप्राशस्त्यस्य बहुभिर्वक्ष्यमाणत्वात्। पित्र्यशब्देनाऽत्र मृताहश्राद्धं विवक्षितम्। आपराह्णिकीति तस्मिन् वचनेऽभिधानात्। आपराण्हिकत्वं च मृताहश्राद्धप्रयोजकमिति वक्ष्यते। एवं तर्हि तिथ्यन्तरमृताहश्राद्धवदत्रापि प्राप्तत्वात् पित्र्यं वा मनुरब्रवीदिति विशेषविधानमनर्थकमितिचेन्न। तदपवादार्थत्वात्। यदा पूर्वेद्युरल्पोऽपराह्णस्पर्शः परेद्युर्भूयाँस्तदा तिथ्यन्तरेषु परेद्युरेव मृताहश्राद्धम्। प्रतिपदि तु तदपवादेन पूर्वेद्युरेव विधीयते। नचाऽत्र पित्र्यशब्दस्यैकोद्दिष्टविषयत्वं युक्तम्। एकोद्दिष्टादीनां मध्याह्नादिकालेषु विहितत्वेन कर्मकालव्यापिन्यास्तिथेस्तत्र ग्रहीतव्यत्वात्। ते च काला हारीतेन दर्शिताः। आमश्राद्धं तु पूर्वाह्णे एकोद्दिष्टं तु मध्यतः * पार्वणं चापराह्णे तु प्रातर्वृद्धिनिमित्तकमिति॥ मनुरपि। पूर्वाह्णे दैविकं श्राद्धमपराह्णे तु पार्वणम्। एकोद्दिष्टं तु मध्याह्ने प्रातर्वृद्धिनिमित्तकमिति। दैविकं विश्वामित्र आह। देवानुद्दिश्य क्रियते यत्तद्दैविकमुच्यते। तन्नित्यश्राद्धवत् कुर्याद् द्वादश्यादिषु यत्नतः॥ तस्मान्नैको-

दिष्टादिकमत्र विवक्षितं, किं तु मृताहश्राद्धम् । अन्यद्वा किञ्चिद् पार्वणश्राद्धम् । अत्र पूर्वविद्धायां शुक्लप्रतिपदि दैवशब्देन विवक्षितो य उपवासस्तमुदाहरामः । भविष्योत्तरपुराणे बृहत्तपाऽभिधे व्रते कार्तिकमासान्तदर्शे पायसभोजनादिनियमं विधायेदं पठ्यते । ततो मार्गशिरे मासि प्रतिपद्यपरेऽहनि । पृष्ट्वा गुरुं चोपवसेन्महादेवं स्मरन् मुहुरिति । ननु पूर्वविद्धायां शुक्लप्रतिपदि योऽयमुपवासो विहितस्तस्य संकल्पः किं प्रातः कार्यः, किं वा प्रतिपत्काले । नाद्यः । अमावास्यावेलायां प्रतिपदुपवाससंकल्पायोगात् ॥ अत एव बौधायनः । यो यस्य विहितः कालः कर्मणस्तदुपक्रमे * तिथिर्याभिगता सा तु कार्या नोपक्रमोज्झितेति । स्कन्दपुराणे, यो यस्य विहितः कालः कर्मणस्तदुपक्रमे । विद्यमानो भवेदङ्गं नोज्झितोपक्रमेण त्विति । न द्वितीयः । प्रातःकालस्यैव संकल्पाङ्गत्वात् । तथाच स्मर्यते । प्रातः संकल्पयेद्विद्वान् उपवासव्रतादिकमिति । तथा, प्रातरारभ्य मतिमान् कुर्याद्भक्तव्रतादिकम् । नापराह्णे न मध्याह्ने पित्र्यकालौ हि तौ स्मृताविति ॥ अत्रोच्यते । यथोक्तवचनबलात् प्रातरेव सङ्कल्पः कार्यः। तदानीं ज्योतिःशास्त्रप्रसिद्धप्रतिपदभावेऽपि स्मृतिभिरापादितायाः प्रतिपदः सत्त्वात् । अत एव देवलः, यां तिथिं समनुप्राप्य अस्तं याति दिवाकरः । तिथिः सा सकला ज्ञेया दानाध्ययनकर्मस्विति ॥ अत्र दानाध्ययनयोरुपवासादिनिखिलदैवोपलक्षणार्थत्वविवक्षया कर्मस्विति बहुवचनं निर्दिष्टम् ॥ अत्रास्तमयात् पूर्वं मुहूर्त्तत्रयव्यापिनीं तिथिं समनुप्राप्येति व्याख्येयं, न तु ततोऽल्पव्याप्तिर्विवक्षिता । तथा सति पूर्वोक्तवेधाभावेनोत्तरतिथेरेव ग्राह्यत्वप्रसङ्गात् । तथा त्रिमुहूर्त्तव्याप्तिः स्कन्दपुराणे दर्शिता, यां तिथिं समनुप्राप्य यात्यस्तं पद्मिनीप्रियः । सा तिथिस्तद्दिने प्रोक्ता

त्रिमुहूर्त्ता च या भवेदिति ॥ शिवरहस्यसौरपुराणयोरपि— यां प्राप्यास्तमुपैत्यर्कः सा चेव स्यात्त्रिमुहूर्त्तिका । धर्मकृत्येषु सर्वेषु सम्पूर्णां तां विदुर्बुधा इति ॥ वृद्धवसिष्ठोऽपि, यस्यां तिथावस्तमियाद् सूर्यस्तु त्रिमुहूर्त्तकैः । यागदानजपादिभ्यस्तामेवोपक्रमेव तिथिमिति ॥ ननु सायन्तनत्रिमुहूर्त्तशुक्लप्रतिपदुपेतायां तिथौ प्रातरेव सङ्कल्प्य प्रतिपदुपवासः कार्य इति युग्मादिवाक्यमाश्रित्य निर्णीतम् । तत्तिथिक्षये तथाऽस्तु । साम्यवृद्धयोस्तु खर्वदर्पवाक्याद् परेद्युरुपवासः प्राप्नोतीति चेन्मैवम् । खर्वादिवाक्यस्यैकोद्दिष्टादिविषयत्वात् । तथाच व्यासः, द्वितीयादिकयुग्मानां पूज्यता नियमाऽऽदिषु । एकोद्दिष्टादिवृद्धयादौ ह्रासवृद्ध्यादिचोदनेति ॥ नियमाऽऽदिष्वित्यादिशब्देन पित्र्यकर्मव्यतिरिक्तव्रतोपवासादिसकलकर्मणो ग्रहणम् एकोद्दिष्टादीत्यादिशब्देन विवाहादिमङ्गलाऽङ्गभूतश्राद्धव्यतिरिक्तपार्वणश्राद्धस्य, वृद्धयादावित्यादिशब्देन माङ्गलिकश्राद्धस्य । ह्रासवृद्धयादीत्यादिशब्देन खर्वग्रहणम् । तदेवं पूर्वेद्युः शुक्लप्रतिपदुपवासं कृत्वा परेद्युः पारणं कुर्यात् ॥

तत्रेदं चिन्त्यते । किं प्रातः पारणं, किं वा तिथ्यन्त इति । नाद्यः । सुमन्तुवचनविरोधात् । तिथिनक्षत्रनियमे तिथिभान्ते च पारणम् * अतोऽन्यथा पारणे तु व्रतभङ्गमवाप्नुयादिति ॥ न द्वितीयः । देवलवचनविरोधात् । उपवासेषु सर्वेषु पूर्वाह्णे पारणं भवेत् * अन्यथा तु फलस्यार्द्धं धर्ममेवोपसर्पतीति ॥ धर्मो यमः । नायं दोषः । पूर्वाह्णवाक्यस्य सामान्यरूपत्वेन परविद्धोपवासविषयतया सङ्कोचनीयत्वात् । एतदेवाभिप्रेत्य निगमः श्रूयते । पूर्वविद्धासु तिथिषु भेषु च श्रवणं विना * उपोष्य विधिवद् कुर्यात्तत्तदन्ते च पारणमिति ॥ भेषु नक्षत्रेषु । स्कन्दपुराणेऽपि, तिथीनामेव सर्वासामुपवासव्रतादिषु । तिथ्यन्ते पारणं कुर्याद्

विना शिवचतुर्दशीमिति ॥ अत्रोपवासव्रतादिष्विस्यादिशब्देनैक-भक्तनक्तायाचितानि गृह्यन्ते । यां तिथिमुद्दिश्यैतानि पूर्वेद्युर्विहितानि परेद्युस्तत्तिथिभागेऽतीते पश्चाद्भोजनं कार्यम् । अन्यथा पूर्वदिनानुष्ठितैकभक्तादिव्रतानां वैकल्यं स्यादित्यभिप्रायः ॥ अस्य च तिथिभान्तपारणस्यापवादः क्वचित् स्मर्यते । तिथ्यन्ते चैव भान्ते च पारणं यत्र चोद्यते * यामत्रयोर्ध्ववर्त्तिन्यां प्रातरेव हि पारणमिति ॥ यथोक्तोपवासवद् बल्युत्सवोऽपि पूर्वविद्धायामेव कर्त्तव्यः । स चोत्सवो ब्रह्मपुराणे वामनपुराणे भविष्योत्तर-पुराणे च प्रपञ्चितः । अत्र प्रातःकाले द्यूतादिकं ब्रह्मपुराणे दर्शितम् । तस्माद् द्यूतं प्रकर्त्तव्यं प्रभाते तत्र मानवैरिति । यद्यपि प्रातरमावास्या वर्त्तते, न तु प्रतिपत्, तथापि पूर्वोक्तसङ्कल्पन्यायेन प्रतिपदः साकल्यमाश्रित्य द्यूतादिकं प्रातरेव कार्यम् । ननु यावेतावुपवासबल्युत्सवौ पूर्वविद्धायां प्रतिपदि विहितौ तयोः केनापि निमित्तेन तत्रानुष्ठानासम्भवे सति किमुत्तरविद्धा गौणकालत्वेन ग्राह्या, किं वा मुख्यकालातिक्रमात्तयोः परित्याग एव । अत्र केचिदाहुः । परित्याग एव युक्तः । मुख्यकालमन्तरेणाप्यनुष्ठाने द्वितीयातृतीयादिष्वपि तदनुष्ठानप्रसङ्गात् । अथोच्येत, यथा त्रैवर्णिकोपनयनस्य गर्भाष्टमादिमुख्यकालासम्भवे सप्तषोडशादिकाला गौणकालत्वेन स्वीकृताः, एवमत्रापीति । तन्न । वैषम्यात् । तत्र गौणकालो वाचनिकः । आषोडशात्तु द्वाविंशाच्चतुर्विंशाच्च वत्सरात् * ब्रह्मक्षत्रविशां काल औपनायनिकः पर इति ॥ न त्वेवमत्रोत्तरप्रतिपदो गौणत्वेन स्वीकारे किञ्चिद् वचनमस्ति । अन्तरेणापि वचनं युक्तिमात्रेण तत्कल्पनायां षोडशादिवर्षेभ्य ऊर्ध्वमपि सन्निकर्षविप्रकर्षतारतम्येन गौणतरगौणतमावुपनयन-कालौ प्रसज्ज्येयाताम् । न च तौ युक्तौ । अत ऊर्ध्वं पन्तसेते

यथाकालमसंस्कृता इति पातित्यस्मरणात् । किञ्च, पूर्वोत्तरविद्ध-योरुभयोरपि स्वीकारे पूज्यत्वविचारो निरर्थकः स्यात् । तस्मात् परित्याग एवेति । तत्र ब्रूमः । सन्त्येवात्रोपनयनवदुत्तरतिथेः साप-काणि बहूनि वचनानि । प्रतिपत् सद्वितीया स्यादित्येकं वचनम् । नन्वेतद्यथोक्तविषयव्यतिरिक्तविषये मुख्यकालत्वं विदधाति, न तु यथोक्तविषये गौणकालत्वमितिचेत् । अत्र वक्तव्यम् । किमत्र विषयान्तरे मुख्यत्वं वाचनिकं, किं वा यथोक्तविषयस्य काले-ऽभिहिते सति अर्थादितरविषयत्वं तस्य वचनस्य परिशिष्यत इति । नाद्यः । तस्मिन् वचने विषयान्तरस्य शब्दतोऽप्रतीतेः । द्वितीये तु सामान्यवचनस्य विशेषव्यतिरिक्तसम्भावितकृत्स्नवि-षयत्वं परिशेषणीयम् । तथा सति कृष्णप्रतिपद्विषयत्वमुपवास-व्यतिरिक्तदानव्रतादिविषयत्वं च सम्भावितत्वाद्यथा परिशिष्यते तथोपवासेऽपि गौणकालविषयत्वं कुतो न परिशिष्यते । द्वितीया-युतोपवासनिषेधादितिचेत् । तस्य निषेधस्य पूर्वविद्धोपवासप्र-शंसायां तात्पर्यात् । अपशवो वा अन्ये गोऽश्वेभ्यः पशवो गो-अश्वा इत्यत्र गोऽश्वप्रशंसार्थमजादीनां पशुत्वं निषिध्यते, न तु सर्वथा तन्निषेधः । प्रत्यक्षविरोधात् । शास्त्रान्तरविरोधाच्च । एव-मत्राप्युत्तरविद्धायां प्रतिपदि सर्वथा प्रतिपदुपवासनिषेधो व्याह-न्यते । तथाचोदितानुदितहोमयोरन्योन्यं निन्देतरप्रशंसायै, न तु सर्वथा हेयत्वार्था । नो चेदुभावपि होमौ परित्यज्येयाताम् । यदि तत्र शाखाभेदेन व्यवस्था, तर्ह्यत्रापि मुख्यगौणभेदेन व्यवस्था-ऽस्तु । न चैतावता तिथेः पूज्यत्वविचारो निरर्थको भवति । प्र-शस्ततिथिस्वीकाराय तदुपयोगात् । यानि चान्यानि सामान्य-वचनानि— उदये तूपवासस्य, पूर्वाह्णिकास्तु तिथयो दैवे कार्ये फलप्रदा इत्यादीनि तानि सर्वाणि यथा कृष्णप्रतिपदमुपोद्बलयन्ति

तथा गौणप्रतिपदं कुतो नोपोद्बलयेयुः । नचैवं सति द्वितीयातृतीयादिष्वपि प्रसङ्गः । गौणप्रतिपत्त्वस्य तत्राभावात् । गौणप्रतिपद्येतावताऽतिनिर्बन्धेन कस्तत्र लाभ इतिचेत्, तत्र द्वेषेण वा तव को लाभ इति वक्तव्यम् । शिष्टाचार इतिचेत्, विपर्यये एव तं पश्यामः । तथाहि । यदा यथोक्तरीत्या कस्याश्चित्तिथेर्द्वैविध्यं भवति तदानीं सम्प्रतिपन्नशिष्टेषु केचन शिष्टाः पूर्वत्रानुष्ठन्ति, अन्ये च परत्र । न च तत्राविगीतः शिष्टाचारः प्रमाणं, नेतर इति वाच्यम् । उभयेषां शिष्टानामविगीतत्वकथनाय सम्प्रतिपन्नेति विशेषितत्वात् । एवं तर्हि मुख्यत्वमप्यन्यतमस्य निश्चेतुमशक्यमितिचेत् । यस्मिन् देशे यस्मिन् काले येषु शिष्टेषु न रागद्वेषस्य स्वस्य प्रामाण्यातिशयस्य बुद्धिस्तदा तादृशाचारस्य मुख्यत्वात् । तदेतदेवाभिप्रेत्य गुरोः शिष्यानुशासने तैत्तिरीयाः समामनन्ति । अथ यदि ते कर्मविचिकित्सा वा वृत्तविचिकित्सा वा स्यात् ये तत्र ब्राह्मणाः समदर्शिनो युक्ता आयुक्ताः अलूक्षाः धर्मकामाः स्युर्यथा ते तत्र वर्तेरँस्तथा त्वं तत्र वर्तेथा इति । युक्तिकुशलैर्युक्ताः शास्त्रतत्पराः । आयुक्तास्तदर्थानुष्ठाननिरताः । अलूक्षाः क्रोधादिवर्जिताः । धर्मकामा जीवन्मुक्तवत्कर्मण्यौदासीन्यमकुर्वाणाः । उक्तरीत्या कस्यचिच्छिष्टाचारविशेषस्य मुख्यत्वे सत्यपरो गौणो भविष्यति, न तु सर्वथैवाऽनाचारः । एवं च सत्येकामेव तैत्तिरीयशाखामधीत्य बौधायनापस्तम्बमतभेदेन परस्परविलक्षणमाचरतामुभयविधानां मनुष्याणां स्वस्वपूर्वपुरुषपारम्पर्यक्रमायात एवाचारो मुख्यः । कदाचित्तदसम्भवे मानान्तरेणाप्यनुष्ठानमेव श्रेयो, न तु सर्वथा तल्लोपो युक्तः । किं बहुना । मुख्यायाः पूर्वविद्धायाः प्रतिपदोऽसम्भवे शेषिपरित्यागाद्वरमुत्तरविद्धायाः परिग्रहणमित्यवगन्तव्यम् । तदेवं शुक्लप्रतिपदुपवासबल्युत्सवयोः

पूर्वविद्धा मुख्येति व्यवस्थितम् ॥

अथैकभक्तनिर्णयः ॥ ब्रह्मपुराणे वैश्वानरव्रते पठ्यते, प्रतिपद्येकभक्ताशी समाप्ते कपिलाप्रद इति। तत्रादावेकभक्तं त्रिविधं– स्वतन्त्रमन्याङ्गमुपवासप्रतिनिधिरूपं चेति । तेष्विदानीमुदाहृतं स्वतन्त्रम्। तत्रेदं चिन्त्यते। किमुपवासवत्तिथिरस्मिन् ग्रहीतव्या उत प्रकारान्तरेणेति। उपवासवदिति तावत् प्राप्तम्। दैवं पित्र्यं तथा कार्यमिति वचनेन उपवासैकभक्तादिकृत्स्नदैवस्य विवक्षितत्वात्। नच कर्मकालव्याप्त्या तन्निर्णय इति शङ्कनीयम्। तत्कालस्याद्याप्यनिर्णीतत्वात् । कथञ्चित्तन्निर्णयेऽपि कर्मकालव्यापिवचनस्य पित्र्यविषयत्वेनाप्युपपत्तेः । तस्मादुपवासवत्तन्निर्णय इति प्राप्ते ब्रूमः । कर्मकालव्याप्तिरेवात्र निर्णयहेतुः । कर्मकालस्तत्कर्मस्वरूपं चेत्युभयं स्कन्दपुराणे दर्शितं, दिनार्द्धसमयेऽतीते भुज्यते नियमेन यत् *एकभक्तमिति प्रोक्तमतस्तत् स्याद्दिवैव हि ॥ देवलोऽपि, दिनार्द्धसमयेऽतीते भुज्यते नियमेन यत्। एकभक्तमिति प्रोक्तं न्यूनं ग्रासत्रयेण त्विति। अत्र च दिनार्द्धस्योपरि सार्द्धमुहूर्त्तपरिमितःकालःपञ्चधा विभागे मध्याह्नस्यापरभाग एकभक्तस्य मुख्यकालः । दिनाऽर्द्धेऽतीते सति समनन्तरभावित्वात् । अस्तमयात् प्राचीनोऽवशिष्टो गौणकालो दिवेत्यभ्यनुज्ञानात्। एवं स्थिते सति मुख्यकालव्यापिनी तिथिर्ग्रहीतव्या । अत एव पद्मपुराणं, मध्याह्नव्यापिनी ग्राह्या एकभक्ते सदा तिथिरिति। बौधायनोऽपि, उदये तूपवासस्य नक्तस्यास्तमये तिथिः * मध्याह्नव्यापिनी ग्राह्या एकभक्ते सदा तिथिरिति । नचात्रोपवासन्यायो युक्तः। तत्र पूर्वविद्धायामेव विशेषशास्त्रपर्यवसानात् । द्विविधं हि विशेषशास्त्रं– तिथिप्रयुक्तमेकं, कर्मप्रयुक्तमपरम्। तत्र, पौर्वाह्णिकास्तु तिथयो दैवे इत्यनेन कर्मविषयेण सामान्यशास्त्रेणोत्तरविद्धा-

यां प्राप्तायाम्, उपोष्याः परसंयुताः पराः पूर्वेण संयुता इत्यनेन कर्मविषयेण विशेषशास्त्रेण पूर्वविद्धा विहिता । तिथिविषये अपि सामान्यविशेषशास्त्रे उदाह्रियेते । पूर्वाह्णिकास्तु तिथय इति तिथिमात्रमुपजीव्य प्रवृत्तत्वात्सामान्यशास्त्रम् । प्रतिपत्संमुखी कार्येत्येतद्विशेषशास्त्रम् । तथा सति द्विविधेनापि विशेषशास्त्रेण पूर्वविद्धायामेवोपवासः सुस्थितः । अत्र तु मध्याह्नव्यापिनीत्येतत्कर्मविशेषविषयशास्त्रम् । अतस्तदनुसारेण निर्णयो युज्यते । ननु प्रतिपत् संमुखी कार्येत्यनेन तिथिविषयेण विशेषशास्त्रेण कुतो न निर्णय इतिचेत् । उपवासविषयत्वेनापि तस्योपपत्तेरिति ब्रूमः । ननु मध्याह्नव्याप्तिवचनमपि तिथ्यन्तरैकभक्तविषयत्वेनोपपादयितुं शक्यम् । अतः कर्मविशेषशास्त्रतिथिविशेषशास्त्रयोः समानबलत्वमितिचेत् । अस्तु नाम । किन्नश्छिन्नम् । मध्याह्नव्यापित्वसंमुखत्वयोः पूर्वविद्धायां संपादयितुं शक्यत्वेन विरोधाभावात् । यदा तूत्तरविद्धायामेव मध्याह्नव्यापित्वं तदा विरोध इतिचेत् । तथापि तिथिविषयविशेषशास्त्रात् कर्मविषयविशेषशास्त्रं प्रबलम् । तिथेर्गुणत्वात् कर्मणश्च प्रधानत्वात् । तस्मादेवंविधे विषये कर्मकालव्याप्त्यैव निर्णेतव्यम् । अत्र निर्णेतव्यो विषयः षोढा भिद्यते । पूर्वेद्युरेव मध्याह्नव्यापित्वम् । परेद्युरेव तद्व्यापित्वम् । उभयत्र तद्व्यापित्वम् । उभयत्र तदव्यापित्वम् । उभयत्र साम्येन तदेकदेशव्यापित्वम् । उभयत्र वैषम्येण तदेकदेशव्यापित्वं चेति । तत्र प्रथमद्वितीययोर्मध्याह्नव्यापित्वस्य निर्णायकत्वम् । तृतीये पूर्वविद्धा ग्राह्या । मुख्यकालव्याप्तेः समत्वेऽपि गौणकालव्याप्तेराधिकत्वात् । अनेनैव न्यायेनोभयत्र मुख्यकालव्याप्त्यभावेऽपि गौणकालव्याप्तिलाभात् पूर्वविद्धैव । पञ्चमेऽप्ययमेव न्यायो योज्यः । षष्ठे तु यदा पूर्वेद्युर्मध्याह्नैकदेशमधिकं व्याप्नोति तदानीं

तदाधिक्याद् गौणकालव्याप्तेश्च पूर्वेद्युर्ग्राह्या । यदा परेद्युर्मध्याह्नैकदेशमधिकं व्याप्नोति तदा गौणकालव्याप्त्यभावेऽपि मुख्यकालव्याप्त्याधिक्याऽनुसारेण परेद्युर्ग्राह्या । नन्वस्त्वेवं स्वतन्त्रैकभक्ते निर्णयः । अन्याङ्गे तु कथम्। तत्र कानुपपत्तिरितिचेत्, उच्यते। पूजाव्रतेषु सर्वत्र मध्याह्नव्यापिनी तिथिरिति, मध्याह्ने पूजयेन्नृपेत्यादिशास्त्रैरङ्गिनः पूजादेर्मध्याह्ने विहितत्वेनाङ्गस्यैकभक्तस्यापराह्णादौ प्राप्यमाणत्वान्न मुख्यकालसम्भवः । मा भूत्तादृशविषये मुख्यः कालः । प्रधानानुसारेण गुणस्य नेतव्यत्वात् । यदा स्वतन्त्रैकभक्तेऽपि केनचिन्निमित्तेन मुख्यकालासंभवे गौणकालोऽभ्यनुज्ञायते तदा किमु वक्तव्यमन्याङ्गे। यत्तूपवासप्रतिनिधिरूपमेकभक्तं तदुपवासतिथौ कार्यम् । तस्य गौणोपवासत्वात् । अत एव सुमन्तुः। तिथौ यत्रोपवासः स्यादेकभक्तेऽपि सा तथेति । नच तादृशमेव नास्तीति शङ्कनीयम् । उपवासव्रतं प्रक्रम्य रोगादिना तदशक्तौ गुर्वनुज्ञया तस्यैकभक्तस्य संभावितत्वात् । अष्टैतान्यऽव्रतघ्नानि आपो मूलं फलं पयः ॥ हविर्ब्राह्मणकाम्या च गुरोर्वचनमौषधमितिशास्त्रात् । इत्येकभक्ते निर्णयः ॥

अथ नक्तं निर्णीयते । तत्र वाराहपुराणे धान्यव्रते पठ्यते । मार्गशीर्षे सिते पक्षे प्रतिपद्या तिथिर्भवेत् ॥ तस्यां नक्तं प्रकुर्वीत रात्रौ विष्णुं प्रपूजयेदिति । अत्र नक्तशब्दो भोजनपरः । कालपरत्वे प्रकुर्वीतेत्यस्यानन्वयात्। न हि कालः केनचित् कर्त्तुं शक्यते । तस्य भोजनस्य रात्राविति कालविधिः । अतो दिवाभोजनरहितत्वे सति रात्रिभोजनं व्रतस्य स्वरूपम् । अन्यथा स्वतः प्राप्तस्य रात्रिभोजनस्य विधानवैयर्थ्यात् । तस्य च नक्तभोजनस्य विष्णुपूजनमङ्गम् । तत्सन्निधौ पठितत्वात् । तथा होमोऽपि तदङ्गम् । होमं च तत्र कुर्वीतेत्यभिधानात् । एवञ्च सति प्रधाना-

ऽविरोधेन पूजाहोमयोरङ्गयोर्दिवानुष्ठानमुक्तं भवति । प्रधानस्य च नक्तस्य कालद्वयं भविष्यत्पुराणे दर्शितम् । मुहूर्त्तोनं दिनं नक्तं प्रवदन्ति मनीषिणः * नक्षत्रदर्शनान्नक्तमहं मन्ये गणाऽधिपेति । अस्य च कालद्वयस्याधिकारिभेदेन व्यवस्थामाह देवलः, नक्षत्रदर्शनान्नक्तं गृहस्थस्य बुधैः स्मृतम् । यतेर्दिनाष्टमे भागे तस्य रात्रौ निषिद्ध्यत इति ॥ स्मृत्यन्तरेऽपि, नक्तं निशायां कुर्वीत गृहस्थो विधिसंयुतः । यतिश्च विधवा चैव कुर्यात्तत्सदिवाकरम् । सदिवाकरं तु तत्प्रोक्तमन्तिमे घटिकाद्वये । निशानक्तं तु विज्ञेयं यामार्द्धे प्रथमे सदेति । रात्रिनक्तभोजने व्यासः, त्रिमुहूर्त्तं प्रदोषः स्याद्भानावस्तङ्गते सति । नक्तं तु तत्र कर्त्तव्यमिति शास्त्रविनिश्चय इति ॥ तदेवं नक्तकालौ व्यवस्थितौ । तत्र नक्तं प्रदोषव्यापिन्यां तिथौ कार्यम् । तदाह वत्सः, प्रदोषव्यापिनी ग्राह्या तिथिर्नक्तव्रते सदा । एकादशीं विना सर्वा शुक्ले कृष्णे तथा स्मृतेति ॥ एकादश्यां तु यन्नक्तं तत्रोदयव्यापिनी तिथिर्ग्राह्या । तदुक्तं स्कन्दपुराणे, प्रदोषव्यापिनी ग्राह्या सदा नक्तव्रते तिथिः । उदयस्था सदा पूज्या हरिनक्तव्रते तिथिरिति । अत्राप्येकभक्तन्यायेन षोढा विषयभेदा उत्प्रेक्षणीयाः । मध्याह्नप्रदोषयोरेव भिन्नत्वात् । पूर्वेद्युरेव प्रदोषव्याप्तौ पूर्वतिथिर्ग्राह्या । परेद्युरेव प्रदोषव्याप्तौ परतिथिः । उभयत्र प्रदोषव्याप्तौ परतिथिरेव । तदाह जाबालिः, सदैव तिथ्योरुभयोः प्रदोषव्यापिनी तिथिः । तत्रोत्तरत्र नक्तं स्यादुभयत्रापि सा यत इति ॥ उभयत्रापि दिवा रात्रौ च सा तिथिर्विद्यते यत इत्यर्थः । उभयत्र प्रदोषव्याप्त्यभावेऽपि परैव । तदाऽऽह जाबालिः, अन्यथात्वे परत्र स्यादस्तादर्वाग् यतो हि सेति । प्रदोषे तदभावेऽप्यस्तमयादर्वाग् यतः सा विद्यते ततः सा ग्राह्येत्यर्थः । अस्य च दिवारात्रव्रतत्वेन प्रदोषव्याप्तिवत् सायङ्कालव्याप्ति-

रपि निर्णयहेतुर्भवतीत्यनेनाभिप्रायेणार्वागस्तमयादित्युक्तम् । दिवारात्रिव्रतत्वं च कूर्मपुराणेऽभिहितं, प्रदोषव्यापिनी यत्र त्रिमुहूर्त्ता यदा दिवा । तदा नक्तव्रते कुर्यात् स्वाध्यायस्य निषेधवदिति । यद्यप्यत्र प्रदोषकालसायङ्कालौ द्वावेव प्रयोजकौ प्रतिभासेते तथापि प्रदोषव्याप्तिर्मुख्यः कल्पः । सायङ्कालव्याप्तिरनुकल्प इति जाबालिवचनाद् अवगम्यते । तत्र ह्यन्यथात्व इति प्रदोषव्याप्त्यभावमनूद्य तादृश्यास्तिथेर्ग्राह्यत्वे अर्वागस्तमयात इति हेतूपन्यासात् । ईदृशे विषये गृहस्थोऽपि यतिवद्दिवा नक्तमाचरेत् । तदुक्तं स्कन्दपुराणे, प्रदोषव्यापिनी न स्याद्दिवा नक्तं विधीयते * आत्मनो द्विगुणच्छायामतिक्रामति भास्करे । तन्नक्तं नक्तमित्याहुर्न नक्तं निशिभोजनम् ॥ एवं ज्ञात्वा ततो विद्वान् सायाह्ने तु भुजिक्रियाम् । कुर्यान्नक्तव्रती नक्तफलं भवति निश्चितमिति ॥

यत्तु सप्तमीभानुवासरादौ सौरनक्तं विहितं, तत्र पूर्वोक्तविपर्यासेन सायङ्कालव्याप्तिर्मुख्यः कल्पः । प्रदोषव्याप्तिरनुकल्पः । एतदेवाभिप्रेत्य सुमन्तुः, त्रिमुहूर्त्तस्पृगेवाह्नि निशि चैतावती तिथिः । तस्यां सौरं भवेन्नक्तमहन्येव तु भोजनमिति ॥ अत्र सायंव्याप्तेर्मुख्यकालत्वात् प्रथमतो निर्देशः । प्रदोषव्याप्तेरनुकल्पत्वात् पश्चान्निर्देशः।इतरनक्तेषु तु प्रदोषव्याप्तेर्मुख्यत्वादुदाहृतकूर्मपुराणवचने सैव प्रथमं निर्दिष्टा । सायङ्कालव्याप्तिः पश्चान्निर्दिष्टेति विवेकः । तेष्वितरनक्तेषु प्रदोषव्याप्तितिथिग्रहणेऽपि भानुवासरसंक्रान्त्यादिना गृहस्थस्यापि यदा रात्रिभोजननिषेधस्तदा दिवैव नक्तं कुर्यात् । तथाच भविष्योत्तरपुराणे, ये त्वादित्यदिने ब्रह्मन्नक्तं कुर्वन्ति मानवाः । दिनान्ते तेऽपि भुञ्जीरन् निषेधाद्रात्रिभोजने इति ॥ अस्मिंश्च दिवाभोजन उत्तमोऽन्तिमो मुहूर्त्तो मध्यम उपान्त्यं, ततः प्राचीनो जघन्यः । एवञ्च सत्यन्तिमभागत्रिमुहूर्त्त-

वचनान्युपपद्यन्ते । रात्रिभोजनेऽपि, घटिकात्रयमुत्तमः कालः । घटिकाषट्कं मध्यमः कालः । एतदेवाभिप्रेत्यवचनं स्मर्यते, प्रदोषोऽस्तमयादूर्ध्वं घटिकात्रयमिष्यत इति, त्रिमुहूर्त्तः प्रदोषः स्याद्रवावस्तङ्गते सतीति ॥ निशीथपर्यन्तो जघन्यः कालः । नक्तं प्रकुर्वीत रात्राविति सामान्येनाभिधानात् । असौरनक्तेषु साम्येन वैषम्येण वा दिनद्वये प्रदोषैकदेशव्याप्तौ परेद्युरेव नक्तं कार्यम् । सायङ्कालस्य गौणस्य तत्तिथिव्याप्तत्वात् । अत्राप्येकभक्तवदन्याऽङ्गनक्तोपवासस्थानीयनक्तयोर्निर्णयोद्रष्टव्यः। यथोक्तलक्षणलक्षितयोरेकभक्तनक्तयोरेकास्मिन् दिने यदा प्रसक्तिस्तदा कथं कर्त्तव्यम् ? । नचैतादृशी प्रसक्तिरेव नास्तीति शङ्कनीयम् । भविष्योत्तरपुराणोक्ते रथसप्तमीव्रते कदाचित्तत्प्रसक्तेः । तथाहि । तत्र तृतीयादिषु सप्तम्यन्तेषु पञ्चसु दिनेषु क्रमेणैकभक्तनक्तायाचितोपवासपारणानि विहितानि । अत्र यदा तृतीया यामत्रयपरिमिता तत ऊर्ध्वं चतुर्थी तदा मध्याह्नव्यापित्वात् तृतीयैकभक्तं तत्र प्राप्तम् । प्रदोषव्यापित्वाच्चतुर्थीनक्तमपि तत्रैव । तथा सति परस्परविरोधो दुष्परिहरः । अत्रोच्यते । एकभक्तस्य प्राथम्यात् प्रबलत्वेन तस्मिन् मुख्यकल्प एवानुष्ठेयः । तद्विरोधिनि तु नक्तेऽनुकल्पः । स च द्विविधः ॥ दिनान्तरानुष्ठानात् कर्त्रन्तरानुष्ठानाच्च । यदा चतुर्थी परेद्युर्वृद्ध्या सायङ्कालं व्याप्नोति तदा तस्य गौणकालव्यापित्वादेक एव कर्त्ता दिनभेदेन व्रतद्वयमनुतिष्ठेत् । यदा चतुर्थी समा क्षीणा च तदा गौणकालस्याप्यसम्भवेन पूर्वेद्युरेव भार्यापुत्रादिना कर्त्रन्तरेण तन्नक्तं करणीयम् ॥ इति नक्तनिर्णयः ॥

अयाचितं निर्णीयते ॥ पूर्वोदाहृते सप्तमीव्रते पञ्चम्यामयाचितं विहितम् । तस्यैकभक्तवत् प्रतिपदोक्तः कालविशेषविधिर्नास्ति । तस्य याचितभोजननिषेधरूपत्वात् । स च निषेध उपवास-

वदहोरात्रं विषयीकरोति । अत एव सङ्कल्पोऽप्यस्मिन्नहोरात्रे याचितमन्नं न भोक्ष्य इत्येवं कर्त्तव्यः । अथवा याचितादन्यद-ऽयाचितमित्यप्रयत्नलभ्यस्य परदत्तस्य भोजनं विवक्ष्यते तदाऽपि पराधीनत्वादेव न तस्य कालविशेषो विधातुं शक्यते । यद्यपि स्वगृहे पूर्वसञ्चितं वस्तु इदानीमयाचितं भवति, तथापि पूर्वं प्र-यत्नसम्पादितत्वाद्याचितमेव । अथवा निषेधस्य प्रसक्तिपूर्वकत्वा-द्याच्ञाप्रसक्तेश्च परद्रव्यविषयत्वात् अयाचितशब्दोऽपि परद्रव्य-मेव विषयीकरोति। अत्रायाचितशब्दस्य यथोक्तरीत्या द्वावर्थौ स-म्पन्नौ–प्रतिषेधः, पर्युदासश्च। तयोः प्रतिषेधपक्षं प्राजापत्यकृच्छ्र-व्याख्यानगौतमो व्यवजहार– अथापरं त्र्यहं नक्तं च न याचेते-ति । पर्युदासपक्षं बृहस्पतिर्व्यवजहार– त्र्यहं प्रातस्त्र्यहं सायं त्र्य-हमद्यादयाचितम् ॥ त्र्यहं परं तु नाश्नीयात् प्राजापत्यं चरन् द्विज इति ॥ स्मृत्यन्तरेऽपि, अयाचिताशी मितभुक् परां सिद्धिमवाप्नु-यादिति ॥ मितभोजित्वं दशग्रासत्वम् । तदुक्तं चतुर्विंशतिमते, प्रातस्तु द्वादश ग्रासा नक्ते पञ्चदशैव तु । अयाचिते तु द्वौ चाऽष्टौ प्राजापत्यो विधिः स्मृत इति । तच्च भोज्यद्रव्यं परकीय-मप्रयत्नोपनीतं चेत्येतदुभयं स्मार्त्तलिङ्गादवगम्यते। तथाच प्रतिग्रह-प्रकरणे याज्ञवल्क्यः, अयाचिताहृतं ग्राह्यमपि दुष्कृतकर्मण इति ॥ तथा यतिधर्मेषु उशनाः, भिक्षाशनं समुद्योगात् प्राक्केनापि नि-मन्त्रितम् । अयाचितं तु तद्भैक्ष्यं भोक्तव्यं मनुरब्रवीत् । यदि प्रतिषेधो यदि वा पर्युदासः, उभयथाऽप्येकभक्तादिवन्न कालो विशेषणीयः । प्रतिषेधेऽनुष्ठेयाभावात् । पर्युदासे पराधीनत्वात् । असति तु कालविशेषविधौ न कर्मकालव्याप्तिवचनमत्र प्रवर्त्तते । तथा सति किं, पूर्वाह्णिकास्तु तिथय इति वचनेन परा ग्राह्या, किं वा युग्माग्निवाक्येन पूर्वेति विवक्षायां युग्मवाक्यस्य तिथिविशेष-

विषयत्वादनुसरणं न्याय्यम् । अनेनैव न्यायेन प्रतिपद्य्ययाचिते पूर्वविद्धैव ग्राह्या । अयाचितस्य नियमरूपत्वात् । द्वितीयादिकयुग्मानां पूज्यता नियमादिष्वित्युक्तत्वात् ॥ इत्ययाचितनिर्णयः॥

प्रतिपद्युपवासैकभक्तनक्तायाचितानि निर्णीतानि । तत्र शुक्लप्रतिपत् पूर्वविद्धोपोष्या । कृष्णप्रतिपदुत्तरविद्धा । एकभक्तनक्तयोः सर्वासु तिथिषु मध्याह्नप्रदोषव्याप्त्या निर्णयः । अयाचितस्य प्रातिस्विककालविशेषविध्यभावात् । उपवासवत् । शुक्लकृष्णप्रतिपदौ पूर्वोत्तरविद्धे ग्रहीतव्ये इत्येतावद्व्यवस्थितम् ॥

अथ प्रतिपद्दानव्रतानि निर्णीयन्ते । भविष्योत्तरपुराणे दानं पठ्यते प्रतिपत्सु द्विजान् पूज्य पूजयित्वा प्रजापतिम् । सौवर्णमरविन्दं च कारयित्वाऽष्टपत्रकम् ॥ कृत्वा त्वौदुम्बरे पात्रे सुगन्धिघृतपूरिते । पुष्पैर्धूपैः पूजयित्वा विप्राय प्रतिपादयेदिति ॥ ब्रह्मपुराणे फलव्रतं पठ्यते, मासि भाद्रपदे शुक्ले पक्षे च प्रतिपत्तिथौ । नैवेद्यं तु पचेन्मौनी षोडशत्रिगुणानि च ॥ फलानि पिष्टपक्वानि दद्याद्विप्राय षोडश । देवाय षोडशैतानि दातव्यानि प्रयत्नतः ॥ भुज्यते षोडश तथा व्रतस्य नियमाशया ॥ एवमन्यान्यपि दानव्रतान्युदाहरणीयानि । तानि च सर्वाण्युत्तरविद्धायां प्रतिपदि कर्त्तव्यानि । तेषां दैवत्वात् । तदाह याज्ञवल्क्यः, पौर्वाह्णिकास्तु तिथयो दैवे कार्ये फलप्रदा इति । यद्यप्येतत् तिथिसामान्यमुपजीव्य प्रवृत्तं, तथापि प्रतिपदि बाधकाभावात् तत्र प्रवर्त्तते । न चात्र युग्मवाक्यं बाधकम् । तस्य तिथिविशेषमुपजीव्य प्रवृत्तस्यापि कर्म कालव्याप्तिवाक्याद् दुर्बलत्वात्तिथिरङ्गं, कर्माङ्गि ततः प्रबलमिति पूर्वमुक्तम् । कर्मकालव्याप्तिं च प्रवृद्धयाज्ञवल्क्यश्चाऽऽह, कर्मणो यस्य यः कालस्तत्कालव्यापिनी तिथिः । तया कर्माणि कुर्वीत ह्रासवृद्धी न कारणमिति ॥ स्कन्दपुराणे, यस्मिन् काले तु यत् कर्म तत्कालव्यापिनी

तिथिः । तया कर्माणि कुर्वीत ह्रासवृद्धी न कारणमिति ॥ गार्ग्योऽपि । यो यस्य विहितः कालस्तत्कालव्यापिनी तिथिः । तयां कर्माणि कुर्वीत ह्रासवृद्धी न कारणमिति । कर्मकालश्च दानव्रतयोर्दैवत्वेन पूर्वाह्णोऽवगन्तव्यः । पूर्वाह्णो वै देवानामिति शास्त्रात् । एकभक्तनक्तयोर्दैवत्वेऽपि प्रतिपदोक्तकालविशेषशास्त्रेण सामान्यरूपं पूर्वाह्णशास्त्रं बाध्यते । न त्वेवं प्रकृतयोर्दानव्रतयोः किञ्चिद्बाधकमस्ति । अह्नः पूर्वो भागः पूर्वाह्णः । स च पञ्चधाविभागपक्षे मुहूर्त्तत्रयात्मकः प्रातःकालः । चतुर्द्धाविभागपक्षे सार्द्धप्रहरात्मकः । त्रिधाविभागपक्षे पञ्चमुहूर्त्तात्मकः । द्वेधाविभागपक्षे सार्द्धसप्तमुहूर्त्तात्मकः । पञ्चदशधाविभागपक्षेऽप्यर्थात् तथैव सम्पद्यते । यद्यपि बहुशास्त्रानुरोधेन पञ्चधाविभाग एवात्र ग्राह्य इति पूर्वमुक्तं, तथापि बहुकर्त्तव्योपेतयोर्दानव्रतयोर्मुहूर्त्तत्रयमात्रेणाऽनुष्ठातुमशक्यत्वादितरेऽपि पक्षा अनुकल्पत्वेन ग्रहीतव्याः । यत्र सार्द्धसप्तमुहूर्त्तैरपि कर्म न समाप्यते तत्र कृत्स्नो दिवसोऽभ्यनुज्ञायते । अत एव देवलः, यां तिथिं समनुप्राप्य उदयं याति भास्करः । सा तिथिः सकला ज्ञेया स्नानदानजपादिष्विति । व्यासोऽपि, उदयन्नेव सविता यां तिथिं प्रतिपद्यते । सा तिथिः सकला ज्ञेया दानाध्ययनकर्मस्विति ॥ भविष्योत्तरपुराणेऽपि, व्रतोपवासनियमे घटिकैका यदा भवेत् । सा तिथिः सकला ज्ञेया पित्र्यर्थे वाऽऽपराह्णिकीति ॥ पद्मपुराणेऽपि, व्रतोपवासनियमे घटिकैका यदा भवेत् । उदये सा तिथिस्तत्र विपरीता तु पैतृक इति ॥ स्कन्दपुराणेऽपि, व्रतोपवासदानादौ घटिकैका यदा भवेत् । उदये सा तिथिर्ग्राह्या विपरीता तु पैतृक इति ॥ विष्णुधर्मोत्तरेऽपि, व्रतोपवासस्नानादौ घटिकैका यदा भवेत् । उदये सा तिथिर्ग्राह्या श्राद्धादावस्तगामिनीति ॥ बौधायनोऽपि, आदित्यो-

दयवेलायां पाऽल्पाऽपि च तिथिर्भवेद् । पूर्णा इत्येव मन्तव्या प्रभूता नोदयं विनेति ॥ नन्वस्त्वेवं कृत्स्नदिवसाभ्यनुज्ञा, तथाप्युत्तरविद्धायास्तिथेर्ग्रहणे कियत्परिमाणमुदये अपेक्षणीयमिति विवेचनीयम् । तत्र बौधायनेनाल्पापीत्यभिधानान्निमेषमात्रं प्रतिभाति । तथा व्यासवाक्येऽपि प्रतिभाति । उदयन्नेवेत्यभिधानात् । भविष्योत्तरपुराणादिवचनेषु घटिकामात्रं प्रतीयते । वचनान्तरे तु विष्णुधर्मोत्तरबौधायनप्रोक्ते घटिकाचतुष्टयं भासते । तथाच पठ्यते, उदिते दैवतं भानौ पित्र्यं चास्तमिते रवौ । द्विमुहूर्त्तं त्रिरह्नश्च सा तिथिर्हव्यकव्ययोरिति ॥ अस्यार्थः । भानावुदिते सत्युत्तरकालेऽह्नो मुहूर्त्तद्वयं दैवतम् । तस्मिंश्चास्तमिते ततः पूर्वकालीनमह्नो मुहूर्त्तत्रयं पितृदैवत्यम् । अतस्तावत्कालव्यापिनी या तिथिर्भवति सैव क्रमेण हव्यकव्ययोर्ग्राह्या । अत्रोच्यते । पौर्वाह्णिका इति वचनेन दैवे पूर्वाह्णव्याप्त्यभिधानात् पूर्वाह्णस्य पञ्चधा विभक्तस्य मुख्यत्वादुदिते भानौ त्रिमुहूर्त्ता तिथिर्ग्रहीतव्या । यत्तु दक्षेणोक्तं, त्रिमुहूर्ता न कर्त्तव्या या तिथिः क्षयगामिनी । द्विमुहूर्त्तापि कर्त्तव्या या तिथिर्वृद्धिगामिनीति ॥ तन्न । त्रिमुहूर्त्तव्याप्तेर्बाधकं प्रत्युतोपोद्बलकमेव । तथाहि । प्रतिषेधः सर्वत्र प्रसक्तिपूर्वकः । प्रसक्तिश्चात्र यथोक्तरीत्या पौर्वाह्णिकवाक्यात्त्रिमुहूर्त्ताभिधायिपैठीनसिवाक्याद्वा भवति । तच्च प्रसक्तं त्रिमुहूर्त्तत्वं समतिथौ बाधकाभावात्तथैव व्यवतिष्ठते । तिथिक्षये त्वाधिकव्याप्तिविधित्सया प्रतिषिध्यते । अतस्तत्र चतुर्थमुहूर्तस्पर्शिनी तिथिर्ग्राह्या । तिथिसाम्यवत्तिथिवृद्धावपि मुहूर्त्तत्रयमेव मुख्यम् । मुहूर्त्तद्वयं त्वनुकल्पः । अत एव सूचयितुं द्विमुहूर्त्तापीत्यपि—शब्दः पठ्यते । नन्वत्र क्षयवृद्ध्युपजीवनेन निर्णयः क्रियते । स चानुपपन्नः । व्यासवाक्ये ह्रासवृद्धिचोदनायाः पित्र्यविषयत्वाभिधानात् । एकोद्दिष्टादिवृद्ध्यादौ

ह्रासवृद्ध्यादिचोदनेति * हि पूर्वमुदाहृतम्। दानव्रते च दैवे। अतः कथमनयोर्वृद्धिक्षयाभ्यां निर्णयः। किञ्च उदाहृतयाज्ञवल्क्य-स्कन्दपुराणगार्ग्यवचनेषु ह्रासवृद्धी न कारणमित्युक्तम्। तत् कथमत्र ह्रासवृद्ध्योर्निर्णयकारणत्वम्?। अत्रोच्यते। सन्ति ह्यन्यानि ह्रासवृद्धिवाक्यानि। तत्रोशनाः। खर्वो दर्पस्तथा हिंस्रास्त्रिविधं तिथिलक्षणम्। खर्वदर्पौ परौ कार्यौ हिंस्रः पूर्वत्र युज्यते॥ भविष्योत्तरे, खर्वो दर्पस्तथा हिंस्रा त्रिविधं तिथिलक्षणम्। खर्वदर्पौ परौ कार्यौ हिंस्रा स्यात् पूर्वकालिकीति। पितामहोऽपि, खर्वो दर्पस्तथा हिंस्रा त्रिविधं तिथिलक्षणम्। खर्वदर्पौ परौ पूज्यौ हिंस्रा स्यात् पूर्वकालिकीति। खर्वः साम्यम्, अल्पक्षयो वा। दर्पो वृद्धिः। हिंस्रा अधिकक्षयः। एतैः खर्वादिवाक्यैः सह यस्मिन् विषये युग्मादिवाक्यस्य विरोधः प्राप्नोति तत्र दैवपित्र्यभेदेन व्यवस्थापकं व्यासवाक्यं, न तु प्रकृतयोः क्षयवृद्ध्योः पितृविषयत्वप्रतिपादकम्। याज्ञवल्क्यादिवचनेष्वपि कर्मकालव्याप्तिशास्त्रस्य खर्वदर्पादिशास्त्रस्य वा विरोधे प्राप्ते सति कर्मकालशास्त्रस्य प्राबल्यमुच्यते, न तु प्रकृतयोः क्षयवृद्ध्योर्निर्णयहेतुत्वं प्रतिषिद्ध्यते। ननु व्यासः खर्वादिवाक्यानि, पित्र्यविषयत्वेन, संकोचयामास। याज्ञवल्क्यादयस्तु पित्र्ये कर्मकालव्याप्त्या खर्वादिवाक्यान्यबाधन्त। हन्तैवं निर्विषयत्वमेषां प्रसज्ज्येतेतिचेत्। नैवम्।

यदा पूर्वोत्तरदिनयोः पित्र्यविषयकर्मकालव्याप्तिः समाना, यदा वा दिनद्वयेऽपि कर्मकालव्याप्त्यभावस्तत्रोभयत्र खर्वादिवाक्यैर्निर्णेतुं शक्यत्वात्। आस्तां प्रासङ्गिकी खर्वादिवाक्यचिन्ता। प्रकृते तु सूर्योदये मुहूर्त्तत्रयव्यापिनी प्रतिपद्दानव्रतयोर्ग्रहीतव्या। एवं सत्युदयमात्रव्याप्तिशास्त्रं, घटिकामात्रव्याप्तिशास्त्रं च, वैश्वानराऽधिकरणन्यायेनात्रयुक्तानुवादरूपतया त्रिमुहूर्त्तव्याप्तिं प्रशंसति।

अथवा पूर्वेद्युरुदयकालं परित्यज्योपरि सर्वत्र व्याप्नोति । परेद्युरुदयकालमात्रं व्याप्नोति । तदानीमुदयानन्तरभाविन्या मुख्यायास्त्रिमुहूर्त्तव्याप्तेर्दिनद्वयेऽप्यभावेन द्वयोरपि दिनयोर्गौणकालत्वे सति किं ग्राह्यमिति वीक्षायां पूर्वदिने कर्मकालव्याप्तेर्भूयस्त्वात्तस्यैव ग्रहणं न्यायतः प्राप्तम् । केनापि निमित्तेन तत्प्रत्यूहे सति परेद्युः कर्मकालव्याप्तिसंपादनाय पूर्णत्वमभिधायोदयविहीनस्य व्याप्तिबाहुल्यस्य हेयत्वोक्तिव्याजेन तदेव प्रशस्यते—आदित्योदयवेलायां याल्पाऽपि च तिथिर्भवेत् । पूर्णा इत्येव मन्तव्या प्रभूता नोदयं विनेति । यदा पूर्वेद्युः सङ्गवमारभ्य परेद्युरुदयात् प्रागेव तिथिक्षयवशात् प्रतिपत्समाप्ता तदा यद्यपि दिनद्वये सोदयमुहूर्त्तत्रयं नास्ति, तथापि पूर्वेद्युरेवानुष्ठेयम् । सा तिथिः सकला ज्ञेया यस्यामस्तमितो रविरिति वचनेन संपाद्यायाः सोदयत्रिमुहूर्त्ताया व्याप्तेर्विद्यमानत्वात् । परेद्युस्तादृश्या अप्यभावात् । यदा पूर्वेद्युरुदयमारभ्य परेद्युरुदयाद् ऊर्ध्वं मुहूर्त्तत्रयं वर्द्धते, तदानीं यद्यपि द्वयोर्दिनयोः सोदयत्रिमुहूर्त्तव्याप्तिरस्ति तथापि पूर्वेद्युरेवाऽनुष्ठानम् । अस्तमयव्याप्तेरधिकत्वात् । अत एव पद्मपुराणेऽभिहितं, व्रते स्नाने तथा भक्ति पितृकार्ये विशेषतः । यस्यामस्तं गतो भानुः सा तिथिः पुण्यभाग्भवेदिति । नन्वास्तां सोदयत्रिमुहूर्त्तव्याप्तिरस्तमयव्याप्तिश्च । निर्णयस्तु शुक्लकृष्णपक्षाभ्यां भविष्यति । तथाच मार्कण्डेयः, शुक्लपक्षे तिथिर्ग्राह्या यस्यामभ्युदितो रविः । कृष्णपक्षे तिथिर्ग्राह्या यस्यामस्तमितो रविरिति । विष्णुधर्मोत्तरेऽपि, वर्द्धमानेन्दुपक्षस्य उदये पूज्यते तिथिः । यदा चन्द्रः क्षयं याति तदा स्यादापराण्हिकीति ॥ अथवा पक्षस्य वृद्धिक्षयाभ्यां निर्णेतव्यम् । तथाच वृद्धवसिष्ठः, वर्द्धमानस्य पक्षस्य उदये पूज्यते तिथिः। यदा पक्षः क्षयं याति तदा स्यादापरा-

ह्निकीति । बौधायनः, सा तिथिस्तच्च नक्षत्रं यस्यामभ्युदितो रविः। वर्द्धमानस्य पक्षस्य हानौ त्वस्तमयं प्रतीति ॥ अत्रोच्यते। शुक्लपक्षकृष्णपक्षाभ्यां निर्णयो न सम्भवति। तथा सति बहुवचनबाधप्रसङ्गात्। तथाहि। यानि वचनानि पूर्वविद्धायां शुक्लप्रतिपदि उपवासविधायकानि पूर्वमुदाहृतानि तानि बाध्येरन्। तथा कृष्णप्रतिपदः परविद्धाया उपोष्यत्वं पूर्वं निर्णीतम्। तच्च विपरिवर्तेत। एवमेकभक्तादावपि यथायोगं विपरिवृत्तिरुन्नेया। नाऽपि पक्षस्य क्षयवृद्धिभ्यां निर्णयो युज्यते। तत्राप्युक्तदोषस्यापरिहार्यत्वात्। यदा शुक्लपक्षस्तिथिवृद्ध्या षोडशादिनात्मको भवति तदा भवन्मते परविद्धायां शुक्लप्रतिपद्युपवासः प्राप्नोति। कृष्णपक्षस्य तिथिक्षयवशाच्चतुर्दशदिनात्मकत्वे पूर्वविद्धायां कृष्णप्रतिपद्युपवासः प्राप्नोति। एवं बाधान्तरमुन्नेयम्। अस्ति च शुक्लकृष्णपक्षवाक्यस्य विनाप्यन्यबाधं विषयविशेषः। तथाह्यङ्गिरसा स्मर्यते, संपूर्णा दशमी कार्या परया पूर्वयाऽथवा। युक्ता न दूषिता तस्मादिति सा सर्वतोमुखीति। तत्र शुक्लकृष्णपक्षाभ्यां व्यवस्था कर्त्तव्या। पक्षवृद्धिक्षयवाक्यमपि पूर्वेण समानविषयतया व्याख्येयम्। वर्द्धमानस्य चन्द्रस्य यः पक्षस्तस्येति योजनीयम्। तथा सति शुक्लपक्ष इत्युक्तं भवति। यदा पक्षः क्षयं याति इत्यत्रापि, पक्षनिर्वाहकश्चन्द्रः क्षयं यातीति व्याख्याने कृष्णपक्ष इति लभ्यते। अतो यथोक्तसोदयत्रिमुहूर्त्तव्याप्तितो निर्णयः सुस्थितः। अत्राऽप्येकभक्तवत् षोढा भिद्यते। उदयकाले पूर्वेद्युरेव त्रिमुहूर्त्तव्यापिनी। परेद्युरेव त्रिमुहूर्त्तव्यापिनी। उभयत्रापि त्रिमुहूर्तव्यापिनी। नोभयत्र त्रिमुहूर्त्तस्पर्शिनी। उभयत्र साम्येन वैषम्येण वा त्रिमुहूर्त्तवर्त्तिन्येकदेशवर्त्तिनी चेति। अत्र प्रथमपक्षे खण्डतिथित्वाभावान्नास्ति सन्देहः। तृतीयादिषु

चतुर्षु पक्षेषु अस्तमयव्याप्तेः कर्मकालबाहुल्यस्य च लाभात् पूर्वेद्युरेवानुष्ठानम् । द्वितीयपक्षे तु क्षयगामित्वे त्रिमुहूर्त्तामप्युत्तरविद्धां परित्यज्य पूर्वेद्युरेवानुष्ठानम् । वृद्धिगामित्वे साम्ये च परेद्युरिति निर्णयः । इष्टयङ्गभूता तु प्रतिपत् पर्वनिर्णये वक्ष्यते । इति दानव्रतनिर्णयः ॥

उक्तान्युपवासैकभक्तायाचितदानव्रतानि प्रतिपद्विषयाणि । तावता दैवविषयो निर्णयः सुस्थितः ॥ अथ पित्र्यं निर्णीयते । तत्र सामान्येनापराह्णप्रतिपदि पित्र्यं विहितम् । प्रतिपत् सैव विज्ञेया या भवेदापराह्णिकी * दैवं कर्म तथा ज्ञेयं पित्र्यं वा मनुरब्रवीदिति हि व्यासवाक्यं पूर्वमुदाहृतम् । पित्र्यं च द्विविधम्— एकोद्दिष्टं, पार्वणं च । तयोः स्वरूपमाह कण्वः, एकमुद्दिश्य यच्छ्राद्धमेकोद्दिष्टं प्रकीर्तितम् । त्रीनुद्दिश्य तु यत्तद्धि पार्वणं मुनयो विदुरिति । तत्र प्रतिपदि मृतस्य मासान्तरवर्त्तिन्यां प्रतिपद्येकोद्दिष्टरूपं मासिकं प्रसक्तम् । संवत्सरान्तरवर्त्तिन्यां तस्यां प्रतिपदि पार्वणरूपमाब्दिकं श्राद्धं प्राप्नोति । तत्र मासिकस्य तद्दिनकर्त्तव्यतामाह याज्ञवल्क्यः । मृतेऽहनि तु कर्त्तव्यं प्रतिमासं तु वत्सरम् । प्रतिसंवत्सरं चैवमाद्यमेकादशेऽहनीति । तेषां च मासिकानामेकोद्दिष्टरूपत्वं पैठीनसिराह, षाण्मासिकाब्दिके श्राद्धे स्यातां पूर्वेद्युरेव ते । मासिकानि स्वकीये तु दिवसे द्वादशेऽपि वा ॥ सपिण्डीकरणादर्वाक् कुर्वन् श्राद्धानि षोडश । एकोद्दिष्टविधानेन कुर्याच्छ्राद्धानि तानि त्विति ॥ अयमर्थः । ऊनषाण्मासिकं सप्तममासगतमृताहदिनात् पूर्वेद्युरनुष्ठेयम् । ऊनाब्दिकञ्च द्वितीयवत्सरादेर्मृताहदिनात्पूर्वेद्युः कर्त्तव्यम् । मासिकानि तु तत्तन्मासमृताहदिनेऽनुष्ठेयानि । स एव मुख्यः कल्पः । यदा तु द्वादशाहादौ सपिण्डीकरणं तदा तस्मात् पूर्वं यस्मिन् कस्मिन्नपि वा दिने मासिका-

न्याऽऽकृष्यानुष्ठेयानि। सोऽयमनुकल्पः।पक्षद्वयेऽप्येकोद्दिष्टविधान-मेव, न तु पार्वणविधानमिति । अत्रेदं चिन्त्यते । किमेकोद्दि-ष्टेष्वपराह्णव्यापिनी तिथिर्ग्राह्या, किं वा सायाह्नव्यापिनी, उता-स्तमयव्यापिनी, अहोस्विन्मध्याह्नव्यापिनीति । नचाऽत्र पक्षा-ऽन्तराणि सम्भाव्यन्ते।तत्प्रापकाभावात्।ननु युग्माग्निवाक्यं तिथि-ह्रासवृद्धिवाक्यं शुक्लकृष्णपक्षवाक्यं पक्षक्षयवृद्धिवाक्यं कर्मकाल-व्याप्तिवाक्यं वा पक्षान्तरप्रापकं भविष्यति । मैवम् ।

पक्षक्षयवृद्धिवाक्यस्य शुक्लकृष्णपक्षपरत्वेन व्याख्यातत्वात् । शुक्लादिवाक्यं तु पूर्वोत्तरयोस्तिथ्योः शास्त्रान्तराभ्यां प्राप्तिसाम्ये सति पुरुषेच्छानिवारणाय व्यवस्थापकमित्युक्तम् । तिथिह्रासवृद्धी तु कर्मकालेन बाध्येते। कर्मकालवाक्ये साक्षादेव, ह्रासवृद्धी न कार-णमित्युक्तत्वात् । युग्मवाक्यं तु न पित्र्यविषयम् । कर्मकालश्च एकोद्दिष्टस्य नाद्यापि निर्णीतः । अतो न पक्षान्तरसम्भवः । उप-न्यस्तेषु तु पक्षेषु प्रथमं तावत् सामान्यविशेषशास्त्राभ्यामपराह्णव्या-पिनी प्रतिभाति । अपराह्णिकास्तथा ज्ञेयाः पित्र्यर्थे तु शुभावहा इति हि निगमवाक्यं पूर्वमुदाहृतम् । हारीतोऽपि, अपराह्णः पितॄ-णां तु याऽपराह्णानुयायिनी। सा ग्राह्या पितृकार्ये तु न पूर्वास्तानु-यायिनीति॥ वृहन्मनुरपि, यस्यामस्तं रविर्याति पितरस्तामुपासते। तिथिं तेभ्यो यतो दत्तो ह्यपराह्णः स्वयम्भुवेति॥ तदेतत् सामान्य-शास्त्रम्। तिथिमात्रमुपजीव्य प्रवृत्तत्वात्। प्रतिपत् सैव विज्ञेया या भवेदापराह्णिकीति तु विशेषशास्त्रं तिथिविशेषोपजीवनेन प्रवृत्त-त्वात् ।ताभ्यामुभाभ्यां शास्त्राभ्यां प्रथमपक्ष उत्तिष्ठति। द्वितीयपक्षे-ऽप्यस्ति शास्त्रद्वयम् । बौधायनः, उदिते दैवतं भानौ पित्र्यं चा-ऽस्तमिते रवौ । द्विमुहूर्त्तं त्रिरह्नश्च सा तिथिर्हव्यकव्ययोरिति ॥ वचनार्थस्तु पूर्वं व्याख्यातः ।तदेतत्सायाह्नव्याप्तेः सामान्यशास्त्रम्।

विशेषस्तु पैठीनसिना दर्शितः, पञ्चमी सप्तमी चैव दशमी च त्रयोदशी । प्रतिपन्नवमी चैव कर्त्तव्या सम्मुखी तिथिरिति ॥ नचाऽत्रापि प्रतिपदः सांमुख्यमात्रं प्रतीयते, न तु सायाह्नव्याप्तिरिति शङ्कनीयम् । सम्मुखी नाम सायाह्नव्यापिनी दृश्यते यदेति * स्कन्दपुराणे सांमुख्यस्य व्याख्यातत्वात् । अस्तमयव्यापित्वपक्षो वृद्धयाज्ञवल्क्येन दर्शितः— देवकार्ये तिथिर्ज्ञेया यस्यामभ्युदितो रविः।पितृकार्ये तिथिर्ज्ञेया यस्यामस्तमितो रविरिति ॥ तथा दानक्रियायामुदाहृतेषु घटिकाव्याप्तिवाक्येष्वस्तमये घटिकाव्याप्तिः पित्र्ये प्रदर्शिता । तथा तदेतदुपन्यस्तं पक्षत्रयमेकोद्दिष्टपार्वणविषयं पित्र्यकर्मसामान्यमुपजीव्य प्रवृत्तत्वात् । एकोद्दिष्टे तु चतुर्थः पक्षो वाचनिकः। तथाच गौतमः, मध्याह्नव्यापिनी या स्यात् सैकोद्दिष्टे तिथिर्भवेत् । अपराह्नव्यापिनी या पार्वणे सा तिथिर्भवेदिति । शिवराघवसंवादेऽपि, मध्याह्नव्यापिनी या स्यात् सैकोद्दिष्टे तिथिर्भवेदिति ॥ कर्मकालव्याप्तिशास्त्रेणाप्ययमेव चतुर्थः पक्षः प्राप्यते। मध्याह्नस्यैकोद्दिष्टे कर्मकालत्वात् । तथाच हारीतशातातपौ । आमश्राद्धं तु पूर्वाह्ने एकोद्दिष्टं तु मध्यमे । पार्वणं चापराह्ने तु प्रातर्वृद्धिनिमित्तकमिति ॥ स्मृत्यन्तरं च, पूर्वाह्ने दैविकं श्राद्धमपराह्ने तु पार्वणम् । एकोद्दिष्टं तु मध्याह्ने प्रातर्वृद्धिनिमित्तकमिति ॥ व्यासः, एकमुद्दिश्य यच्छ्राद्धं दैवहीनं विधीयते । एकोद्दिष्टं तु तत्प्रोक्तं मध्याह्ने तत् प्रकीर्त्तितमिति ॥ मध्याह्नश्च सप्तमाष्टमनवममुहूर्त्तात्मकः। ते च मुहूर्त्ता गान्धर्वकुतपरौहिणसंज्ञकाः । तत्रैकोद्दिष्टस्योपक्रमे कुतपस्य पूर्वोत्तरभागाविच्छया विकल्पितौ । तदाह व्यासः, कुतपप्रथमे भागे एकोद्दिष्टमुपक्रमेत् । आवर्त्तनसमीपे वा तत्रैवं नियतात्मवानिति ॥ समाप्तिकालमाह श्लोकगौतमः, आरभ्य कुतपे श्राद्धं कुर्यादारौहिणं बुधः । विधिज्ञो विधिमास्थाय रौहिणं

तु न लङ्घयेदिति ॥ तदेवं कुतपरौहिणयोर्मध्याह्नगतमध्यमचरमभागयोः कर्मकालव्यत्वास्थितयोः सतोस्तन्मुहूर्त्तव्यापिनी तिथिरेकोद्दिष्टे ग्रहीतव्येति स्थितम्। अत्राप्येकभक्तवद्भेदा अवतारणीयाः। तत्र पूर्वेद्युरेव परेद्युरेव वा मध्याह्नव्याप्तिरित्यनयोः पक्षयोर्न कोऽपि सन्देहः। उभयत्र तद्व्यापित्वं तत्स्पर्शाभावो वेत्यनयोः पक्षयोः पूर्वेद्युरेवानुष्ठानम्। तथा सति पूर्वोदाहृतान्यपराह्णसायाह्नास्तमयव्याप्तिविषयाणि पित्र्यसामान्यवचनान्यनुगृहीतानि भविष्यन्ति। उभयत्र साम्येन एकदेशव्याप्तौ खर्वादिवाक्यं द्रष्टव्यम्। तच्च पार्वणप्रस्तावे योजयिष्यते, वैषम्येणैकदेशव्याप्तौ तु यदा पूर्वेद्युर्महती तदा महत्त्वाऽनुग्रहाच्च सामान्यवचनाऽनुग्रहाच्च पूर्वेद्युरेवानुष्ठानम्। यदा परेद्युरेवाऽमहती तदा सामान्यशास्त्रमुपेक्ष्यापि महत्त्वमेवादरणीयमिति पार्वणश्राद्धनिर्णये वक्ष्यते। अतस्तेनैव न्यायेनात्रापि परेद्युरेवानुष्ठानं द्रष्टव्यम् ॥ इत्येकोद्दिष्टनिर्णयः ॥

अथ पार्वणश्राद्धं निर्णीयते ॥ पर्वण्यमावास्यायां यद्विहितं तत्पार्वणम्। तच्च तत्कालं च शातातप आह। दर्शश्राद्धं तु यत्प्रोक्तं पार्वणं तत्प्रकीर्त्तितम् * अपराह्णे पितॄणां तु तत्प्रदानं विशिष्यत इति ॥ यद्यप्येतादृशं पार्वणं प्रतिपदि न प्राप्नोति तथापि तद्विकृतिरूपतया त्रिपुरुषोद्देशेन कर्त्तव्याऽऽब्दिककाम्यश्राद्धादेः पार्वणत्वं व्यवहर्त्तुं शक्यम्। अत एव काण्ववाक्यं पूर्वमुदाहृतं, त्रीनुद्दिश्य तु यत्तद्धि पार्वणं मुनयो विदुरिति। तथा सति प्रतिपदि मृतस्य वत्सरान्तरे तन्मासतत्पक्षवर्त्तिन्यां प्रतिपद्याब्दिकं पार्वणं प्राप्नोत्येव। एतस्यार्थस्य प्रापकं वचनं मलमासप्रस्तावे दर्शितम्। मासपक्षतिथिस्पृष्टे यो यस्मिन्म्रियतेऽहनि * प्रत्यब्दं तु तथाभूतं क्षयाहं तस्य तं विदुरिति ॥ ब्रह्मपुराणेऽपि, प्रतिसंवत्सरं

कार्यं मातापित्रोर्मृतेऽहनि । पितृव्यस्य त्वपुत्रस्य भ्रातुर्ज्येष्ठस्य चैव हीति ॥ काम्यं तु पार्वणमपरपक्षे सर्वासु तिथिषु प्रत्येकं विहितम् । तथाच याज्ञवल्क्यः, कन्यां कन्यावेदिनश्च पशून् वै सत्सुतानपि । द्यूतं कृषिं च वाणिज्यं द्विशफैकशफाँस्तथा ॥ ब्रह्मवर्चस्विनः पुत्रान् स्वर्णरूप्ये सकुप्यके । ज्ञातिश्रैष्ठ्यं सर्वकामानाप्नोति श्राद्धदः सदा । प्रतिपत्प्रभृतिष्वेकां वर्जयित्वा चतुर्दशीम् । शस्त्रेण तु हता ये वै तेभ्यस्तत्र प्रदीयत इति ॥ मार्कण्डेयोऽपि, प्रतिपद्धनलाभाय द्वितीया द्विपदप्रदा । वरार्थिनी तृतीया च चतुर्थी शत्रुनाशनी ॥ श्रियं प्राप्नोति पञ्चम्यां षष्ठ्यां पूज्यतमो नरः । गाणपत्यं च सप्तम्यामष्टम्यां वृद्धिमुत्तमाम् ॥श्रियं नवम्यां प्राप्नोति दशम्यां पूर्णकामताम् । वेदांस्तथाप्नुयात् सर्वान् एकादश्यां क्रियापरः॥द्वादश्यां जयलाभं च प्राप्नोति पितृपूजकः । प्रजा मेधां पशून् वृद्धिस्वातन्त्र्यं पुष्टिमुत्तमाम् ॥ दीर्घमायुर्धनैश्वर्यं कुर्वाणस्तु त्रयोदशीम् । अवाप्नोति न सन्देहः श्राद्धं श्राद्धपरो नरः ॥ युवानः पितरो यस्य मृताः शस्त्रेण वा हताः । तेन कार्यं चतुर्दश्यां तेषां तृप्तिमभीप्सता ॥ श्राद्धं कुर्वन्नमावास्यां यत्नेन पुरुषः शुचिः ।सर्वान् कामानवाप्नोति श्राद्धकृत्पुरुषः सदेति । अतो त्रिकृतिरूपं पार्वणं सम्भाव्यते । प्रतिपदि तस्य च पार्वणस्योचितां तिथिं निर्णेतुं प्रथमतो विधिनिषेधरूपाभ्यामन्वयव्यतिरेकाभ्यामनुष्ठानकालो निरूप्यते । तत्र शातातपोक्तो विधिरुदाहृतः— अपराह्णे पितृणां त्विति । तथा वाक्यान्तराण्यपि । मनुः, तथा श्राद्धस्य पूर्वाह्णादपराह्णो विशिष्यत इति ॥ वृद्धमनुहारीतवचने चैकोद्दिष्टप्रस्तावे उदाहृते । अपराह्णः स्वयम्भुवेति, अपराह्णः पितृणामिति च ॥ श्रुतिश्च । अपराह्णः पितृणामिति । शङ्खः, पूर्वाह्णे दैविकं कृत्यमपराह्णे पितृक्रिया । ग्रहणे निशि वा कुर्यान्न

रात्रौ पैतृकं पुनरिति ॥ स्मृत्यन्तरेऽपि, अपराह्णे तु पैतृकमिति। ननु सायाह्नस्यापि कर्मकालत्वं क्वचित् स्मर्यते। दिनान्ते पञ्चनाड्यस्तु पुण्याः प्रोक्ता मनीषिभिः। उदये च तथा पित्र्ये दैवे चैव च कर्मणीति ॥ मैवम्। यमेन प्रतिषिद्धत्वात्। सायाह्नस्त्रिमुहूर्त्तः स्याच्छ्राद्धं तत्र न कारयेत्। राक्षसी नाम सा वेला गर्हिता सर्वकर्मस्विति ॥ तर्हि पञ्चनाडीवचनं निर्विषयं स्यादितिचेन्न। केनापि निमित्तेनापराह्णासम्भवे गौणकालाभ्यनुज्ञापरत्वात्। अत एव व्यासः। स्वकालातिक्रमे कुर्याद्रात्रेः पूर्वं यथा विधिरिति ॥ व्याघ्रपादपि। विधिज्ञः श्रद्धयोपेतः सम्यक् पात्रनियोजकः। रात्रेरन्यत्र कुर्वाणः श्रेयः प्राप्नोत्यनुत्तममिति ॥ ननु सायाह्नेऽपि यथाकथञ्चित् प्रत्यूहस्तदा श्राद्धस्य किं लोप एव, किं वा रात्रावपि कर्त्तुं शक्यते। तत्र लोप एवेति तावत् प्राप्तम्?। कुतः। मुख्यकालत्वगौणकालत्वयोः रात्रेर्निषेधात्। मुख्यकालत्वं प्रतिषेधति मनुः, रात्रौ श्राद्धं न कुर्वीत राक्षसी कीर्त्तिता हि सा। सन्ध्ययोरुभयोश्चैव सूर्ये चैवाचिरोदिते इति ॥ नचैवं सति ग्रहणश्राद्धमपि प्रतिषिद्ध्येतेति शङ्कनीयम्। शातातपेन विशेषितत्वात्। रात्रौ श्राद्धं न कुर्वीत राहोरन्यत्र दर्शनात् ॥ सूर्योदयमुहूर्त्ते च सन्ध्ययोरुभयोस्तथेति। गौणकालत्वमपि व्यासव्याघ्रपद्भ्यां पर्युदस्तम्। रात्रेः पूर्वं रात्रेरन्यत्रेति ताभ्यामुक्तत्वात्। तस्मादह्नि श्राद्धाऽसम्भवे लोप एवेति प्राप्ते ब्रूमः। न तावद्रात्रौ सर्वात्मना श्राद्धस्य निषेधो वक्तुं शक्यः। आपस्तम्बेन रात्रौ श्राद्धसमाप्त्यभ्युपगमात्। न च नक्तं श्राद्धं कुर्वीतारब्धे च भोजनसमापनमिति। ननु सन्ध्यासमीपे प्रारब्धस्य रात्रौ समाप्तिप्रसङ्गः। तादृशस्तु प्रारम्भः स्कन्देन निषिद्धः। उपसन्ध्यं न कुर्वीत पितृपूजां कथञ्चन। स कालं आसुरः प्रोक्तः श्राद्धं तत्र विवर्जयेदिति ॥ मैव-

म् । सन्ध्यासामीप्यस्य मुख्यकालत्वनिषेधात् । गौणकालत्वं तु पूर्वमभिहितम् । तत्र प्रारब्धस्य रात्रावपि परिसमाप्तिः सम्भाव्यते । नन्वेवमपि रात्रौ समाप्तिरेवाभ्यनुज्ञायते, न त्वारम्भ इति-चेन्मैवम् । आरम्भस्यापि तया समाप्त्या उपलक्षणीयत्वात् । आब्दिकश्राद्धपरित्यागे प्रत्यवायबाहुल्यस्मरणात् । तथाच भविष्यत्पुराणप्रभासखण्डयोः पठ्यते । मृतेऽहनि पितुर्यस्तु न कुर्याच्छ्राद्धमादरात् ॥ मातुश्चैव वरारोहे वत्सरान्ते मृतेऽहनि ॥ नाहं तस्य महादेवि पूजां गृह्णामि नो हरिरिति ॥ अन्यत्रापि, भोजको यस्तु वै श्राद्धं न करोति खगाधिप । मातापितृभ्यां सततं वर्षे वर्षे मृतेऽहनि ॥ स याति नरकं घोरं तामिस्रं नाम नामत इति ॥ अन्यत्रापि, पण्डिता ज्ञानिनो वाऽपि मूर्खयोषित एव वा । मृताहं समतिक्रम्य चाण्डालाः कोटिजन्मस्विति ॥ मरीचिः, पण्डिता ज्ञानिनो मूर्खास्त्रियो वा ब्रह्मचारिणः । मृताहं समतिक्रम्य चाण्डालेष्वभिजायत इति ॥ नन्वेवं सति, रात्रेरन्यत्र कुर्वाणः श्रेयः प्राप्नोत्यनुत्तममिति स्मरणाद् अपराह्णवन्मुख्यत्वेन सायाह्नवद्गौणत्वेन वा प्रातःसङ्गवावपि कालौ प्रसज्ज्येयाताम् । नाऽयं दोषः । शिवराघवसंवादे प्रातःकालस्य निषिद्धत्वात् । प्रातःकाले तु न श्राद्धं प्रकुर्वीत द्विजोत्तमः । नैमित्तिकेषु श्राद्धेषु न कालनियमः स्मृत इति । यद्यपि सङ्गवो न साक्षान्निषिद्धस्तथापि कुतपमुहूर्त्ते मुख्योपक्रमस्य गान्धर्वमुहूर्त्ते च गौणोपक्रमस्याभिधाने सति अर्थान्निषेधः परिशिष्यते । उपक्रमद्वयं च शिवराघवसंवाद एव दर्शितं, ग्रहादिव्यतिरिक्तस्य प्रक्रमे कुतपः स्मृतः । कुतपादथवाप्यर्वागासनं कुतपं भवेदिति । ग्रहो ग्रहणम् । आदिशब्देन संक्रान्त्यादिनिमित्तमुच्यते । तस्य च निमित्ताऽधीनत्वात् कुतपो न नियन्तुं शक्यते । इतरस्य तु सांवत्सरिका-

देरस्ति कुतपनियमः । स चोपक्रमे नियमः कदाचित् कार्य-वशाच्छ्राद्धस्य सहसा करणीयत्वे सति कुतपादर्वाचीनो गान्धर्वो-ऽप्युपक्रमकालतयाऽभ्यनुज्ञायते । कुतपस्य मुख्यत्वमनेकवचनवि-हितत्वादवगन्तव्यम् । तत्र कुतपस्वरूपं भविष्यत्पुराणेऽभिहितम् । प्रविश्य भानुः स्वच्छायां शङ्कयत्र तिष्ठति । स कालः कुतपो नाम मन्दीभूतस्य संज्ञयेति । नारदः, संत्यज्य सप्तमं भागमष्टमं क्रमते यदा । स कालः कुतपो ज्ञेयो मन्दीभूतस्य संज्ञयेति ॥ आपस्तम्बः,सप्तमाद् परतो यस्तु नवमाद् पूर्वतः स्थितः।उभयोरपि मध्यस्थः कुतपः स उदाहृत इति ॥ स च कुतपो मुख्यत्वाय वायुपुराणे प्रशस्यते । दिवसस्याष्टमे भागे मन्दीभवति भास्करः। स कालः कुतपो नाम पितॄणां दत्तमक्षयमिति॥कुतपाद् पूर्वोत्तर-योर्गन्धर्वरौहिणयोर्गौणप्रक्रमकालत्वं सूचयितुं छत्रियन्यायेन मुहूर्त-त्रयं कुतपशब्देन व्यवजहार नारदः । मध्येऽह्नस्त्रिमुहूर्ते तु यदा भवति भास्करः । स कालः कुतपो नाम पितॄणां दत्तमक्षय-मिति ॥ कुतपे प्रक्रान्तस्य सायाह्नादर्वाचीनः सर्वोऽपि मुख्यो-ऽनुष्ठानकालः । तदुक्तं मत्स्यपुराणे, अह्नो मुहूर्ता विख्याता दश-पञ्च च सर्वदा । तत्राष्टमो मुहूर्तो यः स कालः कुतपः स्मृतः ॥ अष्टमे भास्करो यस्मान्मन्दीभवति सर्वदा । तस्मादनन्तफलदस्त-त्रारम्भो विधीयते ॥ ऊर्ध्वं मुहूर्त्तात् कुतपाद्यन्मुहूर्त्तचतुष्टयम् । मुहूर्त्तपञ्चकं ह्येतद् स्वधाभवनमिष्यत इति ॥ नत्वपराह्णस्यान्तिमो भागो निषिद्धः । तथाच यमः, चतुर्थे प्रहरे प्राप्ते यः श्राद्धं कुरुते नरः।आसुरं तद्भवेच्छ्राद्धं दाता तु नरकं व्रजेदिति ॥ स्मृत्यन्तरे-ऽपि, चतुर्थे प्रहरे प्राप्ते यः श्राद्धं कुरुते द्विजः । तदन्नं राक्षसो भुङ्क्ते निराशाः पितरो गता इतीति चेन्नायं दोषः । इहापराह्ण-स्यान्तिमेन पादन्यूनमुहूर्त्तेन सह सायाह्नश्चतुर्थप्रहरो भवति ।

तत्र सायाह्नभागे कटाक्षेणायं निषेधो, न त्वपराह्णभागकटाक्षेण । तामेतां विवक्षां विशदीकर्त्तुं यमो वचनान्तरेण सायाह्नं निराचकार । तच्च वचनं पूर्वमुदाहृतम् । नन्वपराह्णस्य मुख्यकालत्वं न प्रतिनियतम् । शुक्लपक्षे व्यभिचारात् । तथाच मार्कण्डेयः, शुक्लपक्षे तु पूर्वाह्णे श्राद्धं कुर्याद् विचक्षणः । कृष्णपक्षेऽपराह्णे तु रौहिणं न तु लङ्घयेदिति ॥ नैष दोषः । अत्र शुक्लकृष्णयोः शब्दयोर्दैवपित्र्यपरत्वात् । देवानुद्दिश्य क्रियमाणं श्राद्धं दैवम् । तच्च फलकामिनामुत्साहहेतुतया चित्तप्रसादं जनयतीति शुक्लशब्देनाभिधीयते । एवं पितॄनुद्दिश्य क्रियमाणं पित्र्यम् । तदपि पितृमरणादिस्मारकतया चित्तकालुष्यं जनयतीति कृष्णशब्देनाभिधीयते । शुक्लस्य दैवस्य कर्मणः पक्षः शुक्लपक्षः । यदा दैवं श्राद्धं करिष्यामीति बुद्धिस्तदेत्यर्थः । एवमितरत्र योजनीयम् । एवं सत्यपराह्णो न पार्वणश्राद्धं व्यभिचरति । रौहिणं तु न लङ्घयेदित्येकोद्दिष्टविषयम् । यद्यापाततः प्रतीत एवार्थो वचनस्यास्य परिगृह्येत तदा पूर्वोदाहृतं वचनजातं निखिलमपि व्याकुलीभवेत् । तदेवं पार्वणश्राद्धस्यापराह्णः कर्मकालः । कुतपः प्रारम्भकाल इति । भवेतामेतौ कर्मतदुपक्रमकालौ, प्रकृते तु सांवत्सरिकादौ प्रतिपत् पूर्वविद्धा ग्राह्या, उतोत्तरविद्धेति वीक्षायां, देवस्वामी ब्रूते । यस्मिन् काले यद्विहितं तदुपक्रमोपसंहारयुक्तं तस्मिन् काले तस्यां तिथौ यस्मिन्नहनि तत्संभावयितुं शक्यते तदुत्तरं पूर्वं वा ग्राह्यमिति। यदा कुतपापराह्णोभयव्यापिनी न सम्भवति, तदा केवलापराह्णव्यापिन्यपि तिथिर्ग्रहीतव्या । पित्र्यर्थे चापराह्णिकीति भविष्यत्पुराणेऽभिधानात् । हारीतोऽपि, अपराह्णः पितॄणां तु याऽपराह्णाऽनुयायिनी । सा ग्राह्या पितृकार्ये तु न ग्राह्याऽस्तानुयायिनीति । ननु केवलापराह्णव्यापिनीवत् केवलमध्याह्नव्यापिन्यपि स्मृत्यन्तरे

कर्माऽङ्गत्वेन प्रतीयते । मध्याह्नव्यापिनी या स्यात् तिथिः पूर्वा परापि वा। तत्र कर्माणि कुर्वीत ह्रासवृद्धी न कारणमिति । मैवम्। वचनान्तरसंवादेनाऽस्य वचनस्य एकोद्दिष्टविषयत्वेन एकभक्त-विषयत्वेन चोपपत्तेः। अपराह्णव्याप्तिरेकभक्तन्यायेन षोढा भिद्य-ते । तत्र पूर्वेद्युरेवापराह्णव्याप्तौ यथोक्तवचनेन सा ग्राह्या । परेद्यु-रेवापराह्णव्याप्तौ यथोक्तवचनात् प्रारम्भकालसद्भावाच्च परा शस्ता । उभयत्रापराह्णव्यापित्वे बौधायन आह । अपराह्णद्वय-व्यापिन्यतीतस्य च या तिथिः । क्षये पूर्वा च कर्त्तव्या वृद्धौ कार्या तथोत्तरेति ॥ अतीतस्य मृतस्य ॥

अत्रेदं चिन्त्यते ॥ किं मृताहतिथेः प्रतिपदो वृद्धिक्षयाभ्यां निर्णयः ? उतोत्तरस्या द्वितीयाया वृद्धिक्षयाभ्यामिति। प्रतिपदो वृद्धिक्षयाभ्यामिति तावत् प्राप्तम्।खर्वादिवाक्यतुल्यतया प्रतिभास-मानत्वात्। तथाहि । खर्वो दर्पस्तथा हिंसा त्रिविधं तिथि-लक्षणम्। खर्वदर्पौ परौ कार्यौ हिंसा स्यात् पूर्वकालिकीति ॥ अत्रानुष्ठानाङ्गतिथेरेव धर्माः खर्वदर्पहिंसा, न तूपरितनतिथिधर्माः। एतच्च दर्शनिर्णये स्पष्टीकरिष्यते ।खर्वादिवाक्यवदत्राऽपि ग्राह्य-तिथिगतावेव वृद्धिक्षयाविति प्राप्ते ब्रूमः । उत्तरतिथिगतावेवात्र वृद्धिक्षयौ, न ग्राह्यतिथिगतौ। कुतः।द्वयपराह्णव्यापित्वाभिधानात्। पूर्वेद्युरामध्याह्नावसानममावास्या प्रवृत्ता, ततोऽपराह्णोपक्रममारभ्य परेद्युरपराह्णावसानपर्यन्तत्वे सति प्रतिपदो द्वयपराह्णव्यापित्वं भवति । तच्च त्रिमुहूर्त्तवृद्ध्या सम्पद्यते, न तु क्षयेण । तथा सति, क्षये पूर्वा तु कर्त्तव्येत्येतन्नोपपद्यते । उत्तरातिथिगतवृद्धिक्षयस्वी-कारे तु सुतरामिदं वचनमुपपद्यते । तथाहि । यदा परेद्युर्द्वितीया सायाह्नं प्रविशति तदा तिथिवृद्धिः । तत्र परेद्युरनुष्ठानं न्याय्यम्। कुतपमारभ्याशेषमुख्यकालव्यापित्वात् । यदा द्वितीया परेद्यु-

रपराह्णेऽपि कियती क्षीयते तदा प्रतिपत्पूर्वविद्धा कर्त्तव्या। उत्तरविद्धायाः प्रतिपदो ज्योतिःशास्त्रप्रक्रियया अपराह्णव्यापित्वेऽपि पारिभाषिक्या स्मार्त्तप्रक्रियया तदव्यापित्वात् । तथाच स्मर्यते, तिथ्यादौ च भवेद्यावान् ह्रासो वृद्धिः परेऽहनि । तावान् ग्राह्यः स पूर्वेद्युरदृष्टोऽपि स्वकर्मणीति॥ तिथ्यादावित्यादिशब्देन नक्षत्रयोगौ गृह्येते । तिथिनक्षत्रयोगेषु क्षीयमाणेषु स क्षयो यावद्घटिकापरिमितो भवति तावद्घटिकापरिमितः क्षयस्तेभ्यः पूर्वेषु तिथिनक्षत्रयोगेषु ज्योतिःशास्त्रेणाऽदृष्टोऽपि स्मार्त्तपरिभाषया ग्रहीतव्यः । एवं वृद्धिरपि द्रष्टव्यम्। तथा सति प्रकृतेऽपि द्वितीयाया अपराह्णे यावान् क्षयस्तावान् पूर्वेद्युः प्रतिपदि योजनीयः । तथा सत्युत्तरविद्धा प्रतिपद् नापराह्णव्यापिनी । पूर्वविद्धा तु अपराह्णव्यापिनी । सैव ग्रहीतव्या भवति । नन्वस्मिन् वचने स्वकर्मणीत्युच्यते । ततश्च स्वकर्मनिमित्तो वृद्धिक्षयप्रक्षेप इत्यर्थः सम्पद्यते । न च प्रकृतं प्रत्याब्दिकं द्वितीयायाः स्वकर्म । अतः कथं तदीयवृद्धिक्षयौ वचनस्यास्य विषयौ भवतः । नैष दोषः । मा भूत् प्रत्याब्दिकं द्वितीयायाः स्वकर्म । प्रतिपदस्तु तद्भवत्येव। तथा सति प्रतिपदो यत्कर्म तस्मिन्निमित्तभूते सति तस्यां प्रतिपदि वृद्धिक्षयौ प्रक्षेपणीयाविति वचनार्थः सम्पद्यते । तौ च वृद्धिक्षयौ प्रक्षेपाधिकरणतिथ्यादेरुत्तरतिथ्यादिगताविति लभ्यते। ननु तिथ्यऽन्तरागतयोर्वृद्धिक्षययोस्तिथ्यन्तरप्रक्षेपे सति ज्योतिःशास्त्रप्रसिद्धिः सर्वत्र विप्लवेत । ततस्तां प्रसिद्धिमुपजीव्य प्रवर्तमानः स्मार्त्तनिर्णयः सर्वोऽपि विप्लवेतेतिचेत्। मैवम् । न खल्वयं वृद्धिक्षयप्रक्षेपोऽनुष्ठेयतिथिनिर्णयायोपन्यस्यते, किं तर्हि शास्त्रान्तरेणाऽनुष्ठेयतिथौ निर्णीतायां तदुपपादनायैतावापाद्यौ वृद्धिक्षयावुपन्यस्येते । यथा दानव्रतयोः शास्त्रान्तरेण त्रिमुहूर्त्तव्यापिन्यां

तिथौ निर्णीतायां कर्मकालव्याप्त्यभावशङ्कामपनेतुं, सा तिथिः सकला ज्ञेयेति अविद्यमानमपि साकल्यमापाद्यते। एवमत्राप्य-ऽपराह्णद्वयव्यापिनीत्येतेन बौधायनवचनेन ज्योतिःशास्त्रप्रसिद्धं द्वितीयायाः क्षयमुपजीव्य पूर्वविद्धायां प्रतिपदि निर्णीतायां कुतपा-ऽऽदिकर्मकालव्याप्त्युत्तरविद्धा प्रतिपत् कुतो न ग्राह्येति शङ्काम-पनेतुं तिथ्यादाविति वचनेनोत्तरविद्धायां प्रतिपद्यऽपराह्णे क्षय आपाद्यते। अतो ज्योतिःशास्त्रप्रसिद्धेः स्मार्त्तनिर्णयस्य वा न कोऽपि विप्लवः। यदा दिनद्वयेऽप्यपराह्णमस्पृष्ट्वाऽवशिष्टं किञ्चित् कालं व्याप्नोति तदा पूर्वविद्धा प्रतिपद्ग्रहीतव्या। तदाह मनुः। द्व्यहेऽप्यव्यापिनी चेत् स्यान्मृताहे तु यदा तिथिः। पूर्वविद्धैव कर्त्तव्या त्रिमुहूर्त्ता भवेद्यदीति॥ सुमन्तुरपि। द्व्यहेऽप्यव्यापिनी चेत् स्यान्मृताहस्य तु या तिथिः। पूर्वस्यां निर्वपेत् पिण्डमि-त्याङ्गिरसभाषितमिति। नन्वपराह्णस्पर्श उभयत्रापि समानः। प्रारम्भकाले तु परेद्युः कुतपे सद्भावो विशिष्यते। ततः पर-विद्धैव कुतो न ग्राह्येतिचेद् गुणाधिक्यादिति ब्रूमः। परेद्युः कुतप-प्राप्तिरेक एव गुणः। पूर्वेद्युस्तु तिथिमूलत्वमस्तमयव्याप्तिश्चेति गुण-द्वयम्। मूलस्य प्राशस्त्यं नारदीयपुराणे दर्शितम्। पैत्र्यं मूल-तिथेः प्रोक्तं शास्त्रज्ञैः कालकोविदैरिति॥ शिवरहस्यसौरपुराण-योरपि, प्रायः प्रान्त उपोष्या हि तिथिर्दैवफलेप्सुभिः। मूले हि पितृतृप्त्यर्थं पैत्र्यं चोक्तं महर्षिभिरिति॥ अस्तमयव्याप्तेः प्राशस्त्य-माह मनुः। यस्यामस्तं रविर्याति पितरस्तामुपासते। स पितृभ्यो यतो दत्तो ह्यपराह्णः स्वयम्भुवेति॥ एतत्प्राप्त्यर्थमेवोत्तरविद्धां प्रति-षेधति व्यासः, अह्नयस्तमयवेलायां कलामात्राऽपि या तिथिः। सैव प्रत्याब्दिके श्राद्धे नेतरा पुत्रहानिदेति॥ नचापराह्णवेलायामविद्य-मानतया कर्मकालव्याप्तिरहितायास्तिथेरनुपादेयत्वमिति शङ्क-

नीयम् । आपाद्यायास्तद्व्याप्तेर्विद्यमानत्वात् । अत एव वसिष्ठः, पित्र्येऽस्तमयवेलायां स्पृष्टा पूर्णा निगद्यत इति ॥ नारदीयपुराणेऽपि, पारणे मरणे नृणां तिथिस्तात्कालिकी स्मृता । पित्र्येऽस्तमयवेलायां स्पृष्टा पूर्णा निगद्यत इति ॥ उदाहृताभ्यामस्तमयस्पर्शवाक्याभ्यां कलामात्रत्वाक्ये च पूर्वेद्युः सायङ्कालव्याप्तिर्विवक्षिता। परेद्युरपराह्णस्पर्शहीनस्य पूर्वदिने सायंप्राप्तेरवश्यम्भावात् । अन्यथा षण्मुहूर्त्तक्षयप्रसङ्गात् । एतदेवाभिप्रेत्य गोभिलः, सायाह्नव्यापिनी या तु पार्वणे सा उदाहृतेति । ईदृशे विषये पूर्वविद्धायाः कर्त्तव्यता शिवरहस्यब्रह्मवैवर्त्तसौरनारदीयपुराणेषु व्यतिरेकमुखेन दर्शिता । दर्शं च पूर्णमासं च पितुः सांवत्सरं दिनम् । पूर्वविद्धमकुर्वाणो नरकं प्रतिपद्यत इति ॥ नन्वस्त्वेवमुभयत्रापराह्णस्पर्शाभावे तथाऽपराह्णद्वयव्यापिन्यामुत्तरातिथिगतवृद्धिक्षयाभ्यां निर्णयोऽस्तु । उत्तरातिथेः साम्ये तु कथं चित्तिथिसुलत्वास्तमयव्याप्तिगुणद्वयवशात् पूर्वविद्धा सा कर्त्तव्या, किं वा कुतपसद्भाववशादुत्तरविद्धा।तत्रापराह्णद्वयस्पर्शाभावविषयन्यायेन पूर्वविद्धायां प्राप्तायां देवस्वामिवचनादुत्तरविद्धेति निश्चयः। वचनं हि न्यायाद् बलीयः । यदा तु दिनद्वयेऽप्यपराह्णैकदेशव्याप्तिस्तदापि वैषम्येण तद्व्याप्तौ महत्त्वेन निर्णेतव्यम् । तदाह मरीचिः। द्व्यपराह्णव्यापिनीचेदाब्दिकस्य यदा तिथिः । महती यत्र तद्विद्धां प्रशंसन्ति महर्षय इति ॥ साम्येनोभयत्र व्याप्तिश्च तत्तिथिगतैर्वृद्धिक्षयसाम्यैस्त्रिधा भिद्यते । तथाहि। पूर्वेद्युरपराह्णस्य द्वितीयघटिकामारभ्य परेद्युरपराह्णस्य चरमघटिकां विहाय अवशिष्टासु पञ्चघटिकासु यदा तिथिर्वर्त्तते तदा पूर्वापराह्णस्य प्रथमघटिकां द्वितीयापराह्णस्य चरमघटिकां च विहायावशिष्टासु पञ्चसु घटिकासु वर्त्तमानत्वात् साम्येनैकदेश-व्याप्तिर्भवति । तिथिश्च तदा

घटिकाचतुष्टयेन वर्द्धते । यदा पूर्वापराह्णस्य चरमघटिका उत्तराऽपराह्णस्य प्रथमघटिकायां वर्त्तते । तदापि साम्येन एकदेशव्याप्तिर्भवति । घटिकाचतुष्टयेन तदा तिथिः क्षीयते । यदा पूर्वापराह्णस्य चरमे घटिकात्रये द्वितीयापराह्णस्य चाद्ये घटिकात्रयेऽपि वर्त्तते तदापि साम्येनैकदेश—व्याप्तिस्तदवस्था । तिथिस्तु न वर्द्धते नाऽपि क्षीयते । किन्तु समैव । ईदृशे विषये खर्वदर्पवाक्यान्निर्णयः । तदेवं प्रतिपदपार्वणरूपमाब्दिकं निर्णीतम् । पार्वणरूपस्य काम्यस्य तु दर्शविकारत्वात् । प्रातिस्विकविशेषाभावाच्च वक्ष्यमाणेन दर्शनिर्णयेनैव निर्णयोऽवगन्तव्यः ॥

इति श्रीमाधवीये कालनिर्णये प्रतिपन्निर्णयाख्यं
तृतीयप्रकरणम् ॥ ३ ॥

## अथ चतुर्थं प्रकरणम् ॥ ४ ॥

अथ द्वितीयामारभ्य पर्वावसानाश्चतुर्दश तिथयोऽस्मिन् प्रकरणे निर्णीयन्ते । प्रथमद्वितीयादीनां पञ्चदशकानां क्रमेण चन्द्रमण्डलप्रवेशनिर्गमनाभ्यां शुक्लकृष्णपक्षयोः प्रतिपद्द्वितीयादिनामधेयास्तिथयो भवन्ति । तत्र प्रतिपदि यो निर्णयः पूर्वप्रकरणेऽभिहितः स एवोत्तरासु सर्वासु तिथिषु साम्येन सञ्चारयितव्यः । विशेषस्तु तत्र तत्राभिधास्ये । प्रतिपदि दैवं पित्र्यं व्यवस्थापितम् । दैवं षड्विधम् । उपवासैकनक्तभक्तायाचितदानव्रतभेदेन तीर्थस्नानजपहोमादयस्तु व्रतशब्देनैव संगृहीताः । पित्र्यं द्विविधम्—एकोद्दिष्टं, पार्वणं चेति । तत्र सर्वत्र कर्मकालव्याप्तियुक्ताया एव तिथेरनुष्ठानाङ्गत्वं स्मृतिष्वभिप्रेतम् । कर्मकालश्च द्विविधो—मुख्यो गौणश्चेति । तद्यथा, एकभक्ते मध्याह्ने मुख्यः । आसायमवशिष्टो गौणः । तिथिव्याप्तिर्द्विविधा—स्वाभाविकतिथिव्याप्तिः, साकल्यापादिततिथिव्याप्तिश्चेति । तद्यथा, यदा सङ्गवपर्यन्ताऽमावास्या तदानीमुपरितनो मध्याह्नो मुख्ययैव प्रतिपदा व्याप्तो भवति । यदा त्वपराह्णादिमारभ्य तिथिः क्षयवशात् परेद्युः सङ्गवान्ता प्रतिपद्भवति, तदा पूर्वेद्युर्गौणकालव्याप्तिमुपजीव्यैकभक्तानुष्ठानाय तत्स्वीकारे सति मध्याह्ने वरयानुष्ठेयत्वात्तत्र स्वाभाविकप्रतिपद्व्याप्त्यभावेऽपि साकल्यवचनापादितप्रतिपद्व्याप्तिः स्वीकृता । एवं च सति कर्मकालव्याप्तौ सर्वस्मृतीनामत्यन्तनिर्बन्धदर्शनात् कर्मकालव्याप्तिशास्त्रमितरेभ्यः प्रबलमिति निश्चीयते । तदनुसारेण द्वितीयाद्या अपि तिथय उपवासादौ दैव एकोद्दिष्टादौ पैत्र्ये च कर्मकालव्याप्तियुक्ताः स्वीकर्त्तव्याः । उपवासस्तु सर्वतिथिषु नारदीये दर्शितः । शुक्लान् वा यदि वा कृष्णान् प्रतिपत्प्रभृतींस्तिथीन् ।

उपोष्यैव बलिं दत्त्वा विधिनेत्यपरे दिने ॥ ब्राह्मणान् भोजयित्वा तु सर्वपापैः प्रमुच्यते इति ॥ उपवासस्याहो रात्रः कर्मकालः। तस्मात् तद्व्यापिनी तिथिर्ग्राह्या । तदसम्भवे खण्डतिथि-ग्राह्येति निरूप्यते । तत्र च सूर्योदये त्रिमुहूर्त्ता ततोऽधिका वा प्रतिपद्भवति । उत्तरदिने चास्तमयादर्वाक् त्रिमुहूर्त्ता ततोऽधिका वा तृतीया भवति । सेयमुभयविद्धा द्वितीया। तत्र वेधक-तिथेरुदयेऽस्तमये वा त्रिमुहूर्त्तत्वं वेधप्रयोजकं, न तु ततो न्यून-त्वम् । तदेव पैठीनसिवाक्येन पूर्वमुदाहृतम् । वेध्यतिथेश्च त्रि-मुहूर्त्तसद्भावोऽपेक्षित इति द्विमुहूर्त्तं त्विरहश्चेत्यनेन सुमन्तुवचनेन दर्शितम् । उदयास्तमययोरेव वेध इत्ययमर्थ, उदये सा तिथि-र्ग्राह्या विपरीता तु पैतृके इत्यादिभिः कात्यायनवचनैरवगन्तव्यः। एवञ्च सति यथोदाहृते पूर्वविद्धोत्तरविद्धे ये द्वितीये तयोरुत्तर-विद्धा द्वितीयोपोष्या युग्माग्निवाक्येनान्वयव्यतिरेकाभ्यामुत्तर-विद्धायाः प्राशस्त्याभिधानात् । यद्यप्युपोष्यत्वं साक्षान्नाभिहितं तथापि कर्मान्तरविशेषस्यानुपादानादुपवासविषयत्वं परिशिष्यते। तथाहि । न तावत् पित्र्यविषयत्वं सम्भवति । व्यासेन युग्मादि-शास्त्रस्य खर्वादिशास्त्रस्य च दैवपित्र्यविषयत्वेन व्यवस्थापितत्वात्। नाऽप्येकभक्तनक्तविषयम् । तयोर्मध्याह्नप्रदोषव्याप्त्यऽधीनत्वेन युग्मादिशास्त्रानधीनत्वात् । अयाचितस्य तूपवासवदनुष्ठेयत्वेन न पृथग्विषयत्वम् । न च दानादिविषयत्वम्। दानादेः पौर्वाह्णिक-तिथौ कर्त्तव्यतया निर्णीतत्वात्। अत उपवासविषयत्वं परिशिष्यते। कदाचिदेकभक्तादितिथौ युग्मादिशास्त्रस्य संवादो भवति । तदा तच्छात्रमुपोद्बलकं भवतु, न वयं वारयामः। वचनान्तरे तु युग्मादि-तिथेरुपोष्यत्वं साक्षात् प्रतीयते । तथाच प्रतिपत्प्रकरणे प्रतिपद-मावस्यायुग्मस्योपोष्यत्ववचनमुदाहृतम्। तत्रापि युग्मत्वाभिप्रायेणै-

व द्वितीयायाः परविद्धायाः उपोष्यत्वं भृगुस्मृतिविष्णुधर्मोत्तराभ्यां दर्शितम्— एकादश्यष्टमी षष्ठी द्वितीया च चतुर्दशी । त्रयोदशी चतुर्थी च उपोष्याः स्युः परान्विता इति ॥ यदा पूर्वेद्युरुदयमारभ्य परेद्युरुदयस्योपरि त्रिमुहूर्त्तं वर्द्धते।तदा पूर्वेद्युरेवोपवासः। नच उदाहृतेन पराऽन्विता इति वचनेन विरोधः शङ्कनीयः । परान्वितपूर्वान्वितयोः प्रसक्तयोः सतोरस्य वचनस्य नियामकत्वात् ।न चात्र परान्वितत्वं प्रसक्तमस्ति । पूर्वस्य दिनस्य संपूर्णतिथित्वात् संपूर्णखण्डयोः संपूर्णस्यासंदेहत्वेन प्रबलत्वात् । असंजातविरोधित्वकृत्स्नकर्मकालव्याप्तिभ्यां पूर्वदिनस्यैव प्राबल्यम् । तस्मात्तत्रैवोपवासः।ननु पूर्वोपवासं प्रतिषेधति व्यासः— तृतीयया युता कार्या द्वितीया, न तु पूर्वयेति । मैवम् । अस्य वचनस्य खण्डतिथिविषयत्वेन सम्पूर्णतिथावप्रवृत्तेः । खण्डतिथिविषयत्वं च पूर्वया युता नैव कार्येत्यभिधानादवगम्यते । ननु खण्डतिथावपि द्वितीया पूर्वविद्धैवोपोष्या।प्रतिपत् सद्वितीया स्याद् द्वितीया प्रतिपद्युतेत्यापस्तम्बेन प्रतिपद्द्वितीययोर्युग्मत्वाभिधानात् । एतदेव वचनमुपजीव्य कृष्णप्रतिपत् परविद्धैवोपोष्येति पूर्वं निर्णीतम् । एवं तर्हि द्वितीयापि क्वचित् पूर्वविद्धा भवतु। तदुक्तं स्कन्दपुराणे, प्रतिपत् संमुखी कार्या या भवेदापराह्णिकी । पूर्वाह्णिकी च कर्त्तव्या द्वितीया तादृशी विभो इति ॥ तादृशी संमुखी पूर्वयुतेत्यर्थः । पूर्वेद्युरुदये मुहूर्त्तं परित्यज्यावशिष्टपूर्वाह्णसम्बन्धिनी यदा भवति तदा वेधकारिण्याः पूर्वतिथेर्मुहूर्त्तत्रयाभावेन वेद्धुमसामर्थ्यात् स्वयं खण्डापि सती सम्पूर्णवत् पूर्वत्रोपवासे युज्यते । अत्र द्वितीया नवधा भिद्यते । पूर्वेद्युरुदयमारभ्य प्रवृत्ता, उदयं परित्यज्य प्रवृत्ता, पूर्वाह्णं सर्वं परित्यज्य प्रवृत्तेति त्रयो भेदाः । तेष्वेकैकस्य परेद्युस्त्रिमुहूर्त्तत्वतन्न्यूनत्वशून्यत्वैस्त्रैविध्ये सति मिलित्वा

नवविधत्वं सम्पद्यते। अत्र पूर्वेद्युरुदयमारभ्य प्रवृत्तायाः सम्पूर्णत्वेन परेद्युर्मुहूर्त्तत्रयत्वतन्न्यूनत्वशून्यत्वेषु त्रिष्वपि पक्षेषु विवादाऽविषयत्वात् पूर्वत्रैवोपवासो युक्तः । उदयं परित्यज्य किंचित्पूर्वाह्णभागं प्रक्रम्य प्रवृत्तायाः परेद्युस्त्रिमुहूर्त्ततायां सत्यपि परयुतोपवाससम्भवे तां परित्यज्य पौर्वाह्णिकवचनेन पूर्वेद्युरेवोपवासो विधीयते । परेद्युस्त्रिमुहूर्त्तन्यूनत्वे च वेधकारिण्यास्तृतीयायाः सत्यपि वेद्धुं सामर्थ्ये वेध्याया द्वितीयायास्त्रिमुहूर्त्तत्वाभावेन वेधयोग्यत्वाभावात् तत्रोपवासो न प्रसक्तः । अतः परिशेषात् पूर्वाह्णवाक्याच्च पूर्वत्रैवोपवासः।पूर्वेद्युः पूर्वाह्णं सर्वं परित्यज्य प्रवृत्तायाः परेद्युस्त्रिमुहूर्त्ततयोभयत्र तिथिसत्त्वात् कुत्रोपवास इति सन्देहे सति व्यासेनोत्तरविधानात् पूर्वदिननिषेधाच्चोत्तरत्रोपवासः । नचात्र शुक्लकृष्णव्यवस्था शङ्कनीया । युग्मवाक्ये शुक्लकृष्णपक्षसाधारण्येन परदिनविधानात् कृष्णपक्षेऽपि तत्प्रवृत्तौ बाधाभावाच्च । अन्ययोस्तु पक्षयोः पूर्ववद्वेधानर्हत्वेन पूर्वेद्युः पौर्वाह्णिकत्वाभावेऽपि परिशेषादापस्तम्बोक्तयुग्मवाक्याच्च पूर्वत्रोपवास इति स्थितम् । एकभक्तादिपार्वणश्राद्धान्तेषु कर्मसु द्वितीयाप्रयुक्तस्य विशेषस्य क्वचिदप्यस्मरणात् पूर्वोक्तन्यायो योजनीयः॥इति द्वितीयानिर्णयः॥

अथ तृतीया निर्णीयते॥ तत्र त्रिविधानि वचनानि स्मर्यन्ते । कानिचित् पूर्वविद्धाविधायकानि, कानिचित् पूर्वविद्धानिषेधकानि कानिचिदुत्तरविद्धाविधायकानीति । तत्र युग्मवाक्यं तावत् पूर्वविद्धाविधायकं प्रसिद्धम् । पूर्वविद्धानिषेधकं वाक्यमाहापस्तम्बः । तृतीया तु न कर्त्तव्या द्वितीयोपाहिता विभो * द्वितीयया युतां तां तु यः करोति नराधमः । संवत्सरकृतेनेह स तु धर्मेण लुप्यते॥ द्वितीयाशेषसंयुक्तां तृतीयां कुरुते तु यः। स याति नरकं घोरं कालसूत्रं भयङ्करम् ॥ द्वितीयाशेषसंयुक्तां या करोति विमोहिता ।

सा वैधव्यमवाप्नोति प्रवदन्ति मनीषिण इति ॥ स्कन्दपुराणेऽपि, तृतीया तु न कर्त्तव्या द्वितीयासंयुता तिथिः * या करोति विमूढा स्त्री पुरुषो वा शिखिध्वज । द्वितीयासंयुतां तात पूर्वधर्माद्विलुप्यते । विधवात्वं दुर्भगत्वं भवेन्नास्त्यत्र संशयः ॥ कला काष्ठाऽपि वा चैव द्वितीया सम्प्रदृश्यते । सा तृतीया न कर्त्तव्या कर्त्तव्या गणसंयुता ॥ यदिच्छेत् परमं पुण्यं व्रतकर्त्ता शिखिध्वजेति ॥ अत्र पूर्वविद्धाया निषेधबाहुल्यात् सा न ग्राह्या । युग्मवाक्यं तु रम्भाव्रतविषयं भविष्यति । रम्भाव्रतं तु भविष्यत्पुराणे दर्शितं, भद्रे कुरुष्व यत्नेन रम्भाख्यं व्रतमुत्तमम् । ज्येष्ठशुक्लतृतीयायां स्नाता नियमतत्परेत्यादि ॥ तत्रैवापरं रम्भाव्रतं पठितं, रम्भातृतीयां वक्ष्यामि सर्वपापप्रणाशिनीम् । मार्गशीर्षेऽथवा मासि तृतीयायां नराधिप ॥ शुक्लायां प्रातरुत्थाय दन्तधावनपूर्वकमित्यादि व्रतमभिधायोपसंहृतं, सौभाग्यार्थं पुरा चीर्णं रम्भया राजसत्तम । तेन रम्भातृतीयेयं परं सौभाग्यदायिनीति ॥ एतस्य रम्भाव्रतस्य पूर्वविद्धायां कर्त्तव्यत्वं स्कन्दपुराणे दर्शितम् । बृहत्तपा तथा रम्भा सावित्री वटपैतृकी । कृष्णाष्टमी च भूता च कर्त्तव्या संमुखीतिथिरिति ॥ तत्रैव पूर्वविद्धानिषेधो रम्भाव्रतव्यतिरिक्तविषयत्वेन पठ्यते । द्वितीयया तु विद्धा च तृतीया न कदाचन* कर्त्तव्या व्रतिभिस्तात धर्मकामार्थतत्परैः ॥ विहायैकां च रम्भां च तृतीयां पुण्यवर्द्धनीमिति ॥ उत्तरविद्धाविधायकं तु ब्रह्मवैवर्त्ते दर्शितं, चतुर्थीसंयुता या तु सा तृतीया फलप्रदेति ॥ आपस्तम्बोऽपि, चतुर्थीसंयुता या च सा तृतीया फलप्रदा । अवैधव्यकरी स्त्रीणां पुत्रसौभाग्यवर्द्धनीति ॥ बृहस्पतिरपि, एकादश्यष्टमी षष्ठी पौर्णमासी चतुर्दशी । आमावास्या तृतीया च ता उपोष्याः परान्विता इति ॥ अस्य चोत्तरविद्धाविधायकस्य रम्भाव्यतिरिक्तविषयत्वं

ब्रह्मवैवर्त्ते दर्शितम्। रम्भाख्यां वर्जयित्वा तु तृतीयां द्विजसत्तम। अन्येषु सर्वकार्येषु गणयुक्ता प्रशस्यत इति॥ क्वचित्तु सर्वव्रतेषु पूर्वविद्धैव। तदाह वशिष्ठः, एकादशी तृतीया च षष्ठी चैत्र त्रयोदशी। पूर्वविद्धा तु कर्त्तव्या यदि न स्यात् परेऽहनीति॥अत्र परेऽहन्यसत्त्वं त्रेधा भिद्यते।सर्वथैवासत्त्वं द्विमुहूर्त्तासत्त्वं त्रिमुहूर्त्तासत्त्वं चेति। सर्वथैवासत्त्वे पूर्वदिनानुष्ठानमस्तु। यदा तु परेऽहनि घटिकात्रयं घटिकापञ्चकं भवति। तदा कथमस्त्विति महान् संदेहः। त्रिमुहूर्त्तसद्भावस्य मुख्यकल्पत्वात्। पञ्चघटिकापक्षे मुख्यासम्भवः। द्विमुहूर्त्तसद्भावस्यानुकल्पत्वात्। घटिकात्रयपक्षे तस्याप्यसम्भवः। तदा किं मुख्यानुकल्पयोरभावात् पूर्वेद्युरनुष्ठानं किं वा पूर्वविद्धाया निषेधबाहुल्यादपरेऽहनि अल्पमपि सत्त्वमाश्रित्यानुष्ठानम्। नचात्र किञ्चिन्नियामकं वचनमस्ति। नाऽपि न्यायेन निर्णेतुं शक्यते। न तावत् परदिनं न्याय्यम्। प्रापकाऽभावात्। नापि मुख्यानुकल्पव्यतिरिक्तं कल्पान्तरं सम्भवति। येन प्रापकमाशङ्क्येत। नापि पूर्वदिनं न्याय्यम्। निषेधबाधबाहुल्यात्। वसिष्ठवचनोक्तप्रतिप्रसवेन निषेधो बाध्यत इतिचेत्। नैवम्। तस्य वचनस्य परेद्युरत्यन्तासत्त्वेऽप्युपपन्नत्वात्॥ तस्मादागमन्याययोरत्राप्रवृत्तेरयोगिनोऽसर्वज्ञस्य धर्मसाक्षात्कारासम्भवाच्च शिष्टाचार एवात्र शरणम्। अत एव व्यासः। तर्कोऽप्रतिष्ठः श्रुतयो विभिन्ना न वा ऋषेर्दर्शनमस्ति किञ्चित् * धर्मस्य तत्त्वं निहितं गुहायां महाजनो येन गतः स पन्था इति॥ शिष्टाश्च मुहूर्त्तमात्रसद्भावमाश्रित्य गौरीव्रतं परेद्युरेवानुतिष्ठन्ति। अतो गौरीव्रतं परेद्युरेवानुष्ठेयम्। अन्येषु भविष्यत्पुराणाद्युक्तेषु वित्तेशपूजादिषु मुख्यकल्पेनाऽनुकल्पेन चाऽपरेद्युरनुष्ठानम्। तद्विषयाश्च पूर्वविद्धानिषेधाः। कल्पद्वयासत्त्वे तु विद्यमानायामपि परेद्युः

स्वल्पायामपि तृतीयायां तां परित्यज्य वसिष्ठवचनेन पूर्वेद्युरनुष्ठानम् । एकभक्तनक्ते तु व्रताङ्गे व्रतानुसारेणानुष्ठेये । स्वतन्त्रयोस्तु मध्याह्नप्रदोषव्याप्तिवशेनानुष्ठानम् । रम्भाव्रतेऽप्यस्तमयादर्वाक् तृतीयायास्त्रिमुहूर्त्तसद्भावे तस्यामेव पूर्वविद्धायामनुष्ठानम् । तद्विधायकवाक्येषु संमुखीत्यभिधानात् सांमुख्यस्य च सायाह्नव्याप्तिरूपत्वात् । मुहूर्त्तत्रयान्यूनत्वे सति पूर्वविद्धायाः प्रापकाभावाद्रम्भाव्रते परविद्धाया अनिषिद्धत्वाच्च सामान्यवचनैः परविद्धाप्रशंसकैः परेद्युरनुष्ठानम् । यानि द्वितीयाविद्धाया निषेधकानि वाक्यानि, तेषु द्वितीया कियती विवक्षितेतिचेत् । मुहूर्त्तत्रयपरिमितेति ब्रूमः । वेधशास्त्रे तथाऽभिधानात् । यत्तु कलाकाष्ठापीति वचनं, तत् कैमुतिकन्यायेन त्रिमुहूर्त्तसत्त्वं द्रढयति ॥ इति तृतीयानिर्णयः ॥

अथ चतुर्थी निर्णीयते ॥ सा च युग्मवाक्यात् परविद्धा पूज्या । नच शुक्लपक्षे तथात्वेऽपि कृष्णपक्षे पूर्वैव स्यादिति शङ्कनीयम् । युग्मवाक्यस्य पक्षद्वयसाधारणत्वात् । चतुर्दश्या च पूर्णिमेत्येतच्छुक्लपक्षविषयत्वे लिङ्गमितिचेत् । तस्यैकस्य युग्मस्य शुक्लपक्षविषयाण्येवेति चेन्न । प्रतिपद्यप्यमावास्येत्यनेन पक्षद्वयस्पर्शिना युग्मेन साहचर्यादितरेषामपि पक्षद्वयस्पर्शित्वं किं न स्यात् । एवं तर्हि साहचर्ययोर्द्वयोरपि परस्परकलहादनिर्णय इतिचेन्न । कारणान्तरेण निर्णेतव्यत्वात् । तर्हि चतुर्दशीपूर्णिमायुग्ममेकपक्षवर्त्तितिथिद्वयात्मकत्वाद् द्वितीयादियुग्मैः सदृशम् । प्रतिपदमावास्यायुग्मं तु भिन्नपक्षद्वयवर्तितिथिद्वयरूपत्वाद्विलक्षणम् । अतः पूर्णिमायुग्मसाहचर्येणैव निर्णय इतिचेन्मैवम् । श्रुत्या साहचर्यस्य बाध्यमानत्वात् । द्वितीयादिशब्दो मुख्यया वृत्त्या पक्षद्वयवर्त्तिनस्तिथीन् ब्रूते । सोऽयं श्रुतिलिङ्गादिषु षट्सु प्रथमं प्रमाणम् ।

साहचर्यं तु सन्निधिः, स च स्थानावान्तरभेदत्वात् पञ्चमं प्रमाणम्। तच्च प्रथमादत्यन्तदुर्बलम्। सोऽयमर्थः पूर्वमीमांसायां तृतीयेऽध्याये श्रुतिलिङ्गादिसूत्रे महता प्रबन्धेन प्रपञ्चितः। सूत्रं चैतत्— श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षादिति। इत्थमेव च श्रुतिसन्निध्योर्विरोधमुद्दिश्योत्तरमीमांसायां गुणोपसंहारे विचारितम्। तथाहि। ताण्डिशाखायां श्रूयते। ओमित्येतदक्षरमुद्गीथमुपासीतेति। अस्यायमर्थः। पञ्चभक्तियुक्तस्य साम्न उद्गीथाख्या भक्तिः कश्चिदवयवः। तं चावयवमुद्गाता यागकाले गायति। गीयमानं तमुद्गीथं स एवोद्गाता ताण्डिशाखागतोपनिषद्विहितैरनेकैर्गुणैरुपासीतेति। ते च गुणास्ताण्डिशाखायामेव विहिताः। उद्गीथभक्तिस्तु ताण्डिशार्दूलजैमिनीयतलवकारादिषु सर्वासु सामशाखासु पठिता।

तत्र यदिदं ताण्डिशाखोक्तगुणमुपासनं तत् किं ताण्डिशाखागत एवोद्गीथविशेषे व्यवतिष्ठते, किं वा सर्वशाखागत उद्गीथसामान्ये सञ्चरतीति संशयः। तत्र सन्निधिवशादुद्गीथविशेषेऽवतिष्ठत इति पूर्वः पक्षः। उद्गीथशब्दो मुख्यया वृत्त्योद्गीथसामान्यं ब्रूते। नच सन्निधिना पञ्चमप्रमाणेन प्रथमप्रमाणस्य श्रुतेः सङ्कोचो युक्तः। तस्मादुपासनमुद्गीथसामान्ये चरतीति राद्धान्तः। अनेन न्यायेन प्रकृतेऽपि साहचर्याख्येन सन्निधिना द्वितीयादिश्रुतेः सङ्कोचायोगाद्युग्मादिशास्त्रं पक्षद्वयविषयं द्रष्टव्यम्। यदि चतुर्दशीपूर्णिमयोः कृष्णपक्षविषयत्वं न सम्भाव्यते तर्हि तत्रैकत्र शुक्लपक्षविषयत्वमस्तु। तथा प्रतिपद्युग्ममपि गत्यन्तराभावात् पक्षद्वयसन्धिविषयम्। एवं व्यवस्थितौ सत्यां युग्मशास्त्रेण पक्षद्वयेऽपि चतुर्थी परविद्धैव प्राप्नोति। ननु वचनान्तरेण चतुर्थीद्वयस्य व्यवस्था प्रतीयते। तथाच मार्कण्डेयपुराणे, शुक्लपक्षे तिथिर्ग्राह्या यस्यामभ्युदि-

तो रविः । कृष्णपक्षे तिथिर्ग्राह्या यस्यामस्तमितो रविरिति ॥ अत्र च वक्तव्यम् । किमिदं शुक्लादिवाक्यं युग्मादिशास्त्रनियमनद्वारा एकवाक्यतया तिथीनां व्यवस्थापकम्, उत स्वातन्त्र्येण । यदि नियमद्वारा तर्हि युग्माग्नीसादियुग्मे पूर्वतिथीनामुत्तरविद्धानां पूज्यत्वेन शुक्लपक्षे तिथिर्ग्राह्या यस्यामभ्युदितो रविरित्येतत् पूर्वार्द्धमविरोधि । उत्तरार्द्धं तु विरोधि । तथा तेष्वेव युग्मेषु चरमतिथीनां पूर्वविद्धानां पूज्यत्वेन, कृष्णपक्षे तिथिर्ग्राह्या यस्यामस्तमितो रविरित्युत्तरार्द्धमविरोधि । पूर्वार्द्धं तु विरोधि । तथा दर्शपूर्णप्रतिपद्युग्मे कृष्णपक्षगतस्य दर्शस्योदये पूज्यत्वं, शुक्लपक्षगतायाः प्रतिपदोऽस्तमये पूज्यत्वम् । तथा सति तत्रोभयत्र विरोधः स्फुटतरः । तस्मान्न युग्मादिशास्त्रमनेन नियन्तुं शक्यम् । नापि स्वातन्त्र्येण तिथीनां व्यवस्थापकम् । तत्र युग्मादिशास्त्रविरोधस्याऽपरिहार्यत्वात् । अविरोधेन तु शुक्लादिवाक्यस्य दशमीविषयत्वं प्रतिपत्प्रकरणे प्रसङ्गादुदाहृतम् । तस्माच्छुक्लकृष्णयोरपि पक्षयोर्युग्मादिशास्त्राच्चतुर्थी परविद्धा ग्राह्या । बृहद्वसिष्ठोऽपि, एकादशी तथा षष्ठी अमावास्या चतुर्थिका । उपोष्याः परसंयुक्ताः पराः पूर्वेण संयुता इति ॥ ननु परविद्धोपवासः क्वचित् प्रतिषिध्यते । द्वितीया पञ्चमी वेधाद्दशमी च त्रयोदशी । चतुर्दशी चोपवासे हन्युः पूर्वोत्तरे तिथी इति ॥ अयमर्थः । पञ्चमी वेधेन पूर्वां चतुर्थीं तिथिमुत्तरां च षष्ठीं तिथिमुपवासविषये हन्ति । अतः पञ्चमीविद्धायां चतुर्थ्यां नोपवास इति । नैष दोषः । व्रतभेदेन व्यवस्थोपपत्तेः । सन्ति हि चतुर्थ्यां भिन्नदेवताविषयाणि बहूनि व्रतानि । तत्र विष्णुधर्मोत्तरप्रोक्ते चतुर्मूर्तिव्रते मूर्तिचतुष्टयोपेतो विष्णुर्देवता । स्कन्दपुराणोक्ते अङ्गारकचतुर्थीव्रते भौमो देवता । कूर्मपुराणोक्ते यमव्रते यमो देवता । सौरपुराणादिप्रोक्तेषु दूर्वा-

गणपत्यादिव्रतेषु विनायको देवता । कूर्मपुराण इव प्रोक्ते नाग-चतुर्थीव्रते शेषशङ्खपालादयः सर्पा देवताः । तत्र विनायकनाग-व्यतिरिक्तानां व्रते परेद्युरुपवासः प्राप्नोति । तादृशे विषये पञ्चमी-वेधनिषेधो व्यवस्थापनीयः । तथा पूर्वविद्धाप्रशंसा च तस्मिन्नेव विषये द्रष्टव्या । अत एव ब्रह्मवैवर्त्ते पूर्वोत्तराविद्धयोर्विधिनिषेधौ स्मर्येते— चतुर्थीसंयुता कार्या तृतीया च चतुर्थिका । तृतीयया युता नैव पञ्चम्या कारयेत् क्वचिदिति ॥ तथा तत्रैव पूर्वविद्धा प्रशस्यते । चतुर्थीसंयुता या च सा तृतीया फलप्रदा । चतुर्थी तु तृतीयायां महापुण्यफलप्रदेति ॥ तस्याश्च विनायकव्रतविषयत्वं तत्रैव सूचितम् । कर्त्तव्या व्रतिभिर्वत्स गणनाथसुतोषणीति * । स्कन्दपुराणेऽपि, विनायकव्रते कार्या सर्वमासेषु षण्मुख । चतुर्थी तु जयायुक्ता गणनाथसुतोषणीति ॥ विनायकव्रतानुष्ठाने चतुर्थ्या मध्याह्नव्यापित्वं मुख्यं प्रयोजकम् । तदाह बृहस्पतिः । चतुर्थी गणनाथस्य मातृविद्धा प्रशस्यते । मध्याह्नव्यापिनी चेत् स्यात् परतश्चेत् परेऽहनीति ॥ यदा पूर्वेद्युर्मध्याह्नव्यापिनी भवति तदा मुख्यप्रयोजकस्य विद्यमानत्वाद् मातृविद्धत्वगुणसद्भावाच्च सा ग्राह्या । तादृशे विषये परेद्युः सत्यामपि मध्याह्नव्यापिन्यां सा-ज्या । अत एव प्रशस्यत इत्युक्तम् । परेद्युरेव यदा मध्याह्नव्या-पिनी तदा मातृविद्धत्वगुणभावेऽपि प्रधानप्रयोजकानुसारेण पर-विद्धैव ग्राह्या । तथाच स्मृत्यन्तरम् । मातृविद्धा प्रशस्ता स्याच्च-तुर्थी गणनायके । मध्याह्ने परतश्चेत् स्यान्नागविद्धा प्रशस्यत इति॥

ननु बहुषु वचनेषु पूर्वविद्धाया गणनाथसन्तोषत्वमुक्तम् । अतः पूर्वविद्धत्वस्यैव मुख्यप्रयोजकता युक्ता । मैवम् । मध्याह्न-व्यापित्वस्यैव वैयर्थ्यप्रसङ्गात् । अनवश्यं हि तदा मध्याह्नव्या-पित्वं प्रसङ्गाद्भवति । अतस्तद्विधानं व्यर्थम् । व्यावर्त्याभावात् ।

अथोच्येत पक्षान्तरेऽप्यनेकवचनविहितस्य पूर्वविद्धत्वस्य वैयर्थ्यं तदवस्थम् । मध्याह्नव्यापित्वेनैव तन्निर्णयादिति । तन्न । यदा तिथिक्षयवशादुभयत्र मध्याह्नव्याप्तिर्नास्ति । यदा चोभयत्र कृत्स्न-मध्याह्नव्यापित्वं तदेकदेश—व्यापित्वं वा समानं तत्र सर्वत्र मध्या-ऽह्नव्याप्त्या निर्णयाभावे सति पूर्वविद्धत्वेनैव निर्णेतव्यत्वात् । एवं तर्हि सावकाशनिरवकाशयोर्निरवकाशं बलीय इति न्यायेन मध्या-ऽह्नव्यापित्वस्य निरवकाशतया प्राबल्यमित्येव वक्तव्यं, न तु मुख्यतयेतिचेत् । मुख्यत्वस्यापि सम्भवात् । तिथिनिर्णये कर्म-कालव्याप्तिशास्त्रस्य मुख्यत्वमस्य प्रकरणस्य प्रारम्भे दर्शितम् । कर्मकालश्च विनायकव्रतस्य मध्याह्नः । प्रातः शुक्लतिलैः स्नात्वा मध्याह्ने पूजयेन्नृपेति तत्कल्पे विधानात् । अतो मुख्यत्वादपि मध्याह्नव्यापित्वं प्रबलमिति । ननु कस्याञ्चित् स्मृतौ पूर्वविद्धत्वेन मध्याह्नव्यापित्वबाध उपलभ्यते । जया च यदि सम्पूर्णा चतुर्थी ह्रसते यदि * जया सैव हि कर्त्तव्या नागविद्धां न कारयेदिति स्मरणात् ॥ मैवम् । अस्य वचनस्य दिनद्वये मध्याह्नस्पर्शाभाव-विषयत्वेनाप्युपपत्तेः । तथाहि । पूर्वदिने विनायकप्रयोजके मध्या-ऽह्ने जया सम्पूर्णा । परेद्युर्मुहूर्त्तत्रयक्षयवशान्मध्याह्नादर्वागेव चतुर्थी समाप्ता । तदा दिनद्वये कर्मकाले ग्राह्यतिथेश्चतुर्थ्या अभा-वाद्विनायकव्रते किं दिनमुपादेयमिति वीक्षायां पूर्वदिनं विधाय परदिनं प्रतिषेधति । अथोच्यते । जया च यदि सम्पूर्णेत्यनेन कर्म-कालरूपमध्याह्नसमाप्तिपर्यन्तत्वं न विवक्षितं, किं तर्ह्यस्तमयपर्यन्त-त्वमिति । एवं तर्हि पूर्वविद्धैव नास्ति । वेधिकायाः पूर्वतिथेः सम्पूर्णत्वे सति वेध्यायाश्चतुर्थ्या अनवकाशत्वात् । अथ मा भूत् पूर्वविद्धत्वं, तथापि मध्याह्नव्यापिन्यां जयायां विहितायां परे-द्युर्मध्याह्नव्यापित्वं बाध्यत इतिचेन्मैवम् । न खलूत्तरदिनहेयत्वे

मध्याह्नव्यापित्वं कारणतयोपन्यस्यते, किन्तु नागविद्धत्वम्। अतो नागविद्धत्वनिन्दायां वचनस्य तात्पर्यं, न चतुर्थीरहितजयाविधाने। अन्यथा चतुर्थीनिन्दायामपि तात्पर्यं प्रसज्ज्येत। न च तदुक्तम्। न हि वरघाताय कन्यामुद्वाहयन्ति। वचनच्छाया तु कैमुतिकन्याये परा लक्ष्यते। यदि–शब्दप्रयोगात्। यद्यपि जया सम्पूर्णा तथापि नागविद्धा हेया, किमुत जयायुक्तायां चतुर्थ्यां सम्भवन्त्यामिति हि वचनव्यक्तिः। मध्याह्नव्याप्तावियती भक्तिः कुतस्तवेति चेत्। चतुर्थीरहितायां शुद्धतृतीयायां तत्रापि कुतो भक्तिरिति समानः पर्यनुयोगः। वचनबलादित्युत्तरमस्माकमपि वचनयोः परस्पर-कलहे पूर्वोक्ताभ्यां मुख्यत्वनिरवकाशत्वाभ्यां मध्याह्नवचनमेवाति-प्रबलम्। सिद्धिविनायकव्रते तस्य प्रतिपदोक्तत्वादपि प्रबलत्वम्। जयावचनं तु गौर्यादिव्रते चरितार्थम्। तच्च व्रतं भविष्यत्पुराणे अभिहितम्। विनायकं समभ्यर्च्य चतुर्थ्यां यदुनन्दन। सर्व-विघ्नविनिर्मुक्तः कार्यसिद्धिमवाप्नुयादित्यभिधायानन्तरमिदं पठ्य-ते। निद्रां रतिं शिवां भद्रां कीर्त्तिं मेधां सरस्वतीम्। प्रज्ञां तुष्टिं तथा कान्तिं तत्रैवाहनि पूजयेत्॥ विद्याकामो विशेषेण पूजयेच्च सरस्वतीमिति॥ लिङ्गपुराणेऽपि। चतुर्थ्यां तु गणेशस्य गौर्या-श्चैव विधानतः। पूजां कृत्वा लभेत् सिद्धिं सौभाग्यं च नरः क्रमा-दिति॥ नारदीयपुराणेऽपि, माघशुक्लचतुर्थ्यां तु गौरीमाराधयेद् बुधः। चतुर्थी वरदा नाम गौरी तत्र सुपूजितेति॥ अतो यथोक्त-रीत्या विनायकव्रते मध्यह्नव्यापित्वेनैव निर्णयः। गौरीव्रते तु जयावचनं द्रष्टव्यम्। तत्र यदा दिनद्वयेऽप्येतद्वैषम्ये मध्याह्नैक-देशव्यापिनी तदा पूर्वदिने तन्महत्त्वं चेति तदेवोपादेयम्। उत्तर-दिने तन्महत्त्वे किं महत्त्वगुणेन तदुपादेयं, किं वा मातृविद्ध-त्वगुणेन पूर्वमुपादेयमिति संशये पूर्वमिति ब्रूमः। परस्य नाग-

विद्धत्वदोषोपेतत्वात्। पूर्वस्य च तदभावत्वात्। एतदेवाभिप्रेत्य स्कन्दपुराणे पठ्यते— ज्येष्ठा च वटसावित्री तथाऽनङ्गत्रयोदशी। विनायकचतुर्थी च कर्त्तव्या संमुखी तिथिरिति॥ विनायकव्रतवन्नागव्रतेऽपि चतुर्थी मध्याह्नव्यापिनी ग्राह्या। नागव्रतं च कूर्मपुराणे दर्शितम्। तिथौ युगाह्वयायां च समुपोष्य यथाविधि। शङ्खपालादिनागानां शेषस्य च महात्मनः॥ पूजा कार्या पुष्पगन्धक्षीराप्यायनपूर्वकम्। विषाणि तस्य नश्यन्ति न च तान् घ्नन्ति पन्नगा इति॥ युगाह्वया चतुर्थी। मध्याऽह्नव्यापित्वं च देवलेनोक्तम्। युगमध्यन्दिने यत्र तत्रोपोष्य फणीश्वरान्। क्षीरेणाऽऽप्याय्य पञ्चम्यां पूजयेत् प्रयतो नरः॥ विषाणि तस्य नश्यन्ति न तान् हिंसन्ति पन्नगा इति॥ विनायकचतुर्थीनागचतुर्थ्योरियान् विशेषः। एकभक्तन्यायेन मध्याह्नव्याप्तेः षोढा भेदे सति यदा परेद्युरेव मध्याह्नव्याप्तिस्तदा विनायकचतुर्थी परा। इतरेषु तु पञ्चसु भेदेषु जयायोगस्य प्रशस्तत्वात् पूर्वेद्युरेव सा भवति। यदा तु पूर्वेद्युरेव मध्याह्नव्यापिनी तदा नागचतुर्थी पूर्वा। इतरेषु तु पञ्चसु भेदेषु पञ्चमीयोगस्य प्रशस्तत्वाद् उत्तरा भवति। तत्प्राशस्त्यं च, पूजयेदिति वचनाद् अवसीयते॥ इति चतुर्थीनिर्णयः॥

अथ पञ्चमी निर्णीयते॥ युग्मशास्त्रेण पञ्चमी पूर्वविद्धा ग्राह्या। ननु, प्रायः प्रान्त उपोष्या हि तिथिर्दैवफलेप्सुभिरिति शिवरहस्यसौरपुराणयोस्तिथ्यग्रभागस्य उपवासाङ्गत्वाभिधानात्। पञ्चम्युपवासः परेद्युः प्राप्नोति। तन्न। हारीतेन पराविद्धायाः प्रतिषिद्धत्वात्। चतुर्थीसंयुता कार्या पञ्चमी परया न तु। दैवे कर्मणि पित्र्ये च शुक्लपक्षे तथाऽसित इति॥ न चैतावता, प्रायः प्रान्त इति वचनस्य निर्विषयत्वं शङ्कनीयम्। निर्णीतासु निर्णेय-

माणासु च तिथिषु यत्र यत्र परविद्धोपवासः शास्त्रान्तरेण प्राप्तस्तस्य सर्वस्य तद्विषयोपपत्तेः। नच तेनैव शास्त्रेण तदुपवाससिद्धेः कृतमनेन वचनेनेति शङ्कनीयम्। सामान्यविशेषरूपेण शास्त्रद्वयस्यापि चरितार्थत्वात्। तस्य सामान्यशास्त्ररूपस्य प्रान्तोपवासवचनस्य विरोधिना षष्ठीयुक्तपञ्चमीनिषेधकेन विशेषशास्त्ररूपेण हारीतवचनेन बाधो युज्यते। एतादृशं बाधमभिलक्ष्यैव, प्रायः प्रान्त उपोष्येति प्रायःशब्दः प्रयुक्तः। प्रतिपन्न्यायेन पौर्वाह्णिका इति वचनबलात्। पञ्चम्यामपि दानव्रतयोः परदिनानुष्ठानप्राप्तौ तद्व्यावृत्तये हारीतवचने, दैवे कर्मणीत्युच्यते। नच दैवकर्मणि पूर्वाह्णस्य कर्मकालशास्त्रप्राबल्यस्य च वर्णितत्वात् तद्बाधो न युक्त इति शङ्कनीयम्। विधेर्निषेधस्य वा प्रतिपदोक्तस्य प्रबलतरत्वात्। नच पूर्वदिनपूर्वाह्णस्यासन्तकर्मकालत्वम्। साकल्यवचनापादितकर्मकालत्वस्य सद्भावात्। ईदृशमेव विषयमभिलक्ष्य साकल्यवचनस्य प्रवृत्तत्वात्। स्वाभाविकातिथिव्याप्तियुक्ते विषये साकल्यवचनस्य निरर्थकत्वात्। तस्माद्दैवकर्मणि परविद्धायाः पञ्चम्याः निषेधो न विरुध्यते। नन्वेवमपि पित्र्ये निषेधो निरर्थकः पित्र्यस्य स्वत एव परविद्धायामप्राप्तत्वात्। मैवम्। दृष्टान्ततयाऽपि च तदुपन्यासोपपत्तेः। यथा पित्र्यकर्मणि उत्तरविद्धा न ग्राह्या तथा दैवेऽपीति विवक्षया दैवपित्र्ययोः सहोपन्यासः। ननु व्यासनिगमगतयुग्मशास्त्रमुदाहृत्य भवता पञ्चम्याः पूर्वविद्धत्वमभिधीयते। आपस्तम्बादयस्तु तद्विपर्ययेण युग्मान्युदाजहूरुः। प्रतिपत् सद्वितीया स्याद् द्वितीया प्रतिपद्युता। चतुर्थीसहिता या च सा तृतीया फलप्रदा॥ पञ्चमी च प्रकर्त्तव्या षष्ठ्या युक्ता च नारदेति॥ अत एव एतद्युग्मशास्त्रपर्यालोचने पञ्चम्याः परविद्धत्वं प्राप्नोति। बाढम्। अत एवात्र शुक्लकृष्णशास्त्रेण

व्यवस्था प्रसक्ता। तां निषेद्धुं हारीतेन, शुक्लपक्षे तथासित इत्युक्तम्। नच सा व्यवस्था वचनेन निषेद्धुमशक्या। किं हि वचनं न कुर्यान्नास्ति वचनस्यातिभार इति न्यायात्। तस्माद्धारीतवचनेन पञ्चमी पूर्वविद्धा ग्राह्या। स्कन्दपुराणेऽपि, पञ्चमी च तथा कार्या चतुर्थ्या संयुता विभो। तथा पद्मपुराणभविष्यत्पुराणयोः पूर्वोत्तरविद्धाविषयौ विधिनिषेधौ स्मर्येते, पञ्चमी च चतुर्थ्या तु कार्या षष्ठ्या न संयुतेति॥ यत्तु ब्रह्मवैवर्त्तेऽभिहितम्। पञ्चमी तु प्रकर्त्तव्या षष्ठ्या युक्ता तु नारदेति। तद्वचनं स्कन्दोपवासविषयतया सङ्कोचनीयम्। वाक्यशेषे तथाऽभिधानात्। स्कन्दोपवासे स्वीकार्या पञ्चमी परसंयुतेति वाक्यशेषः॥ नचासञ्जातविरोधिनो वाक्योपक्रमस्य सञ्जातविरोधिना वाक्यशेषेण कथं सङ्कोच इति शङ्कनीयम्। असंदिग्धोपक्रमस्य प्राबल्येऽपि संदिग्धोपक्रमस्य वाक्यशेषेण निर्णेतव्यत्वात्। अत एव जैमिनिनाऽपि सूत्रितं, सन्दिग्धे तु वाक्यस्य शेषादिति। अतः स्कन्दोपवासे पञ्चमी परविद्धा। अन्यत्र पूर्वविद्धेति स्थितम्॥ इति पञ्चमीनिर्णयः॥

अथ षष्ठी निर्णीयते। सा च युग्मशास्त्रद्वयेन द्विविधा प्रतिभाति। तत्र षण्मुन्योरित्येकं युग्मशास्त्रम्। तेन षष्ठ्याः सप्तमीविद्धत्वं प्रतीयते। पञ्चमी च प्रकर्त्तव्या षष्ठ्या युक्ता च नारदेत्यपरं युग्मशास्त्रम्। तेन षष्ठ्याः पञ्चमीविद्धत्वं प्रतीयते। तयोः शास्त्रयोः किं शुक्लकृष्णभेदेन व्यवस्था कार्या, किं वा दैवपित्र्यभेदेन, उत स्कन्दव्रताऽन्यव्रतभेदेन। तत्र न तावत् प्रथमः कल्पः। सुमन्तुना पक्षद्वयव्यवस्थां निराकृत्य दैवपित्र्यभेदेन व्यवस्थापितत्वात्। तथाच तद्वचनं, नागविद्धा न षष्ठी स्यात् पक्षयोरुभयोरपि। दैवे कर्मणि तामन्यां पित्र्ये पूर्वेण संयुतामिति॥ नाऽपि द्वितीयः।

दैवपित्र्यभेदेन व्यवस्थाया अयुक्तत्वात्। तथाहि। यदेतत् सुमन्तुना दैवे कर्मणि शुक्लपक्षद्वयगतायाः षष्ठ्या नागविद्धत्वं प्रतिषिद्ध्यते तत्तथास्तु। यन्नागविद्धायाः पित्र्ये व्यवस्थापनं तत्र वक्तव्यम्। किं पूर्वविद्धत्वमेकोद्दिष्टविषयं, किं वा पार्वणविषयम्। नोभयमप्युपपद्यते। मध्याह्नापराह्णव्याप्तिभ्यामेव द्वयोर्निर्णये सति पूर्वविद्धताया अकिञ्चित्करत्वात्। नचैवं मन्तव्यम्। परेद्युः सत्यामपि मध्याह्नापराह्णव्याप्तौ तत्परित्यागाय पूर्वविद्धत्वविधानमिति मुख्यकर्मकालव्याप्तेः परित्यागायोगात्। अन्यथा, मूषकभिया स्वकर्मगृहं दहतीति न्याय आपतेत्। तर्हि सुमन्तुवचनस्य का गतिरितिचेत्। उच्यते। न खल्वेतद्वचनं पित्र्ये पूर्वविद्धां विधातुं प्रवृत्तं, किं तर्हि देवतां निवारयितुं तत्प्रवृत्तिः। तत्रार्थवादत्वेन पित्र्ये साऽभ्यनुज्ञायते। तत्रेयं वचनव्यक्तिः। यदि नाम कथञ्चित् पूर्वविद्धा भवेद्, भवतु नाम सा। पित्र्ये तिथिमूलस्य प्रायेण पितृतुष्टिहेतुत्वात्। दैवे सर्वथा पूर्वविद्धा न ग्राह्येति। तस्मात् तृतीयः पक्षः परिशिष्यते। स्कन्दव्रते पूर्वविद्धा व्रतान्तरेषु तूत्तरविद्धेति। तत्र स्कन्दषष्ठ्याः पूर्वविद्धत्वमाह वसिष्ठः— कृष्णाऽष्टमी स्कन्दषष्ठी शिवरात्रिश्चतुर्दशी। एताः पूर्वयुताः कार्यास्तिथ्यन्ते पारणं भवेदिति॥ स्कन्दषष्ठी लिङ्गपुराणे दर्शिता— प्रत्यब्दमपि षष्ठ्यां च षष्ठी कार्या गुहस्य च। दीप्ताग्निः संमुखी च स्यात्तस्मिन्नागामिवत्सर इति॥ तत्रैव रविषष्ठी दर्शिता— षष्ठ्यामुपोष्य विधिवत् सप्तम्यामर्कमर्चयेत्। स द्रव्यभागऽरुक् चैव सम्प्राप्नोतीप्सितं फलमिति॥ फलषष्ठी मन्दारषष्ठीत्यादिव्रतानि षष्ठ्या भविष्योत्तरे प्रोक्तानि। तत्र तत्र रव्यादिव्रतेषु परविद्धा ग्राह्या। तदुक्तं विष्णुधर्मोत्तरे— एकादश्यष्टमी षष्ठी पौर्णमासी चतुर्दशी। अमावास्या तृतीया च ता उपोष्याः परान्विता इति॥

यद्यप्यत्र व्रतविशेषो नोपात्तस्तथापि स्कन्दव्रतस्य पूर्वविद्धायां विहितायां परिशेषादन्येषामुत्तरविद्धा भवति । तेषामप्यविरोधाद् पूर्वविद्धास्त्विति चेन्न । प्रतिषेधात् । तथाच निगमः । नागविद्धा तु या षष्ठी रुद्रविद्धो दिवाकरः । कामविद्धो भवेद्विष्णुर्न ग्राह्यास्ते तु वामराः ॥ नागः पञ्चमी । रुद्रः षष्ठी । दिवाकरः सप्तमी । कामस्त्रयोदशी । विष्णुर्द्वादशी । शिवरहस्यसौरपुराणयोः—

नागविद्धा तु या षष्ठी शिवविद्धा तु सप्तमी । दशम्येकादशीविद्धा नोपोष्या तु कथञ्चनेति ॥ तथा पूर्वविद्धाप्रतिषेधः, उत्तरविद्धाविधिश्चेत्युभयं सहैव स्कन्दपुराणे पठ्यते । नागविद्धा तु कर्त्तव्या षष्ठी च न कदाचन । सप्तमीसंयुता कार्या षष्ठी धर्मार्थचिन्तकैरिति ॥ ब्रह्मवैवर्त्तेऽपि । न हि षष्ठी नागविद्धा कर्त्तव्या तु कदाचन । नागविद्धा तु या षष्ठी कृता पुण्यक्षया भवेत् ॥ सप्तम्या सह कर्त्तव्या महापुण्यफलप्रदेति ॥ पुण्यस्य क्षयो यस्यां सा पुण्यक्षया । यदि कदाचित्तिथिक्षयवशादुत्तरविद्धा षष्ठी न लभ्यते, तदा स्कन्दव्रतवदन्यान्यपि व्रतानि नागविद्धायां कर्त्तव्यानि । तदाह वसिष्ठः । एकादशी तृतीया च षष्ठी चैव त्रयोदशी । पूर्वविद्धा तु कर्त्तव्या यदि न स्यात् परेऽहनीति । नागवेधश्च षण्मुहूर्त्तात्मकः । तथाच स्कन्दे । नागो द्वादशनाडीभिर्दिक् पञ्चदशभिस्तथा । भूतोऽष्टादशनाडीभिर्दूषयत्युत्तरां तिथिमिति ॥ इति षष्ठीनिर्णयः ॥

अथ सप्तमी निर्णीयते ॥ इह हि सप्तम्यां नानादेवताकानि बहूनि व्रतानि । तत्र भविष्योत्तरप्रोक्तम् उमामहेश्वरदेवताकं मुक्ताभरणसप्तमीव्रतम् । तथा भविष्यत्पुराणे सूर्यदेवताकं विजयसप्तमीकं व्रतमुक्तम् । सूर्यदेवताकमारोग्यसप्तमीव्रतं वराहपुराणेऽभिहितम् । विष्णुदेवताकं माङ्गल्यव्रतं गारुडपुराणेऽभिहितम् । एव-

मन्यान्यप्युदाहरणीयानि। तत्र काश्चित्तिथयो देवताभेदेन व्यातिष्ठमाना लक्ष्यन्ते । तद्यथा, स्कन्दषष्ठी पूर्वविद्धा मन्दारादिषष्ठी परविद्धा । काश्चित् सत्यामेकस्यां देवतायां व्रतभेदेन व्यवतिष्ठन्ते । तथा तत्र गौरीव्रतेष्वेव रम्भातृतीया पूर्वविद्धा, लवणतृतीया परविद्धा । काश्चिदेकदेवताका एकस्मिन् व्रते कर्मकालव्याप्तिभेदेन व्यवतिष्ठन्ते। तद्यथा। विनायकव्रते पूर्वेद्युः परेद्युर्वा चतुर्थी मध्याह्नव्यापिनी गृह्यते । काश्चिच्छुक्लकृष्णभेदेन व्यवतिष्ठन्ते । तद्यथा। शुक्लप्रतिपत् पूर्वविद्धा। कृष्णप्रतिपदुत्तरविद्धेति । तत्र केन न्यायेन सप्तमी व्यवस्थापनीयेति वीक्षायां, न केनाऽपीति प्रतिजानीमहे । सप्तम्याः पूर्वविद्धानिन्दकस्य उत्तरविद्धाविधायकस्य वचनस्य च कस्यचिद्दर्शनात् । तद्विपर्ययेण पूर्वविद्धाविधायकस्योत्तरविद्धानिषेधकस्य सर्वत्रोपलम्भात् । सर्वासु देवतासु सर्वेषु व्रतेषु शुक्लकृष्णपक्षयोरपि सप्तमी पूर्वविद्धैव ग्राह्या । युग्मादिशास्त्रे, षण्मुन्योरित्यभिधानात् । स्कन्दपुराणे । कर्त्तव्या सप्तमी तत्र षष्ठी यत्र च सर्वदा । षष्ठी तु सप्तमी यत्र तत्र सन्निहितो रविरिति । भविष्यत्पुराणब्रह्मपुराणयोः । षष्ठी च सप्तमी तात अन्योन्यं तु समाश्रिते । पूर्वविद्धा द्विजश्रेष्ठ कर्त्तव्या सप्तमी तिथिरिति ॥ पैठीनसिः। पञ्चमी सप्तमी चैव दशमी च त्रयोदशी । प्रतिपन्नवमी चैव कर्त्तव्या संमुखी तिथिरिति ॥ उत्तरविद्धाप्रतिषेधः स्कन्दपुराणे दर्शितः । षष्ठ्येकादश्यमावास्या पूर्वविद्धा तथाऽष्टमी। सप्तमी परविद्धा च नोपोष्यं तिथिपञ्चकमिति । न च व्रतविशेषेणाप्युत्तराविद्धायामाशा कर्त्तव्या। तदुक्तं ब्रह्मवैवर्त्ते । सप्तमी नाष्टमीयुक्ता न सप्तम्या युताऽष्टमी । सर्वेषु व्रतकल्पेषु अष्टमी परतः शुभेति । यदा पूर्वेद्युरस्तमयपर्यन्ता षष्ठी परेद्युस्तिथिक्षयेणास्तमयादर्वागष्टमी त्रिमुहूर्त्ता तदा पूर्वविद्धाया अलाभा-

दुत्तरविद्धायाश्च प्रतिषिद्धत्वात् कुत्राऽनुष्ठानमितिचेत् । निषेध-मुलङ्घ्याप्युत्तरविद्धायामिति ब्रूमः । यद्यप्यस्मिन्नर्थे वचनं नोपलभ्यते, तथापि शेषिलोपन्यायत्वादुत्तराविद्धा गौणकालत्वेन स्वीकर्त्तव्या । अस्ति चात्र दृष्टान्तः । स्कन्दव्यतिरिक्तव्रतेषु पूर्वविद्धायाः षष्ठ्या निषेधमुलङ्घ्य, यदि न स्यात् परेऽहनीति वाक्येन पूर्वविद्धा गृहीता । तथा रम्भाव्यतिरिक्तगौरीव्रतेषु द्वितीयायुता स्वीकर्त्तव्या । तेनैव न्यायेनात्राप्यष्टमीविद्धायाः स्वीकारोऽस्तु ॥ इति सप्तमीनिर्णयः ॥

अथाष्टमी निर्णीयते॥ द्विविधो हि तत्र निर्णयः—व्रतसामान्यनिर्णयो व्रतविशेषविषयश्चेति । व्रतसामान्ये तु शुक्लकृष्णपक्षभेदाद्व्यवतिष्ठते । तत्र शुक्लाऽष्टमी परा ग्राह्या । षण्मुन्योर्वसुरन्ध्रयोरिति युग्मशास्त्रात् । यद्यप्येतच्छास्त्रं पक्षद्वयसाधारणमिति चतुर्थीप्रस्तावे प्रतिष्ठितम् । तथापि शास्त्रान्तरबलात् शुक्लपक्षे पर्यवस्यति ; तथाच निगमः । शुक्लपक्षेऽष्टमी चैव शुक्लपक्षे चतुर्दशी । पूर्वविद्धा न कर्त्तव्या कर्तव्या परसंयुता ॥ उपवासादिकार्येषु एष धर्मः सनातन इति ॥ ब्रह्मवैवर्त्ते । सप्तमी नाष्टमीयुक्ता न सप्तम्या युताष्टमी । सर्वेषु व्रतकल्पेषु अष्टमी परतः शुभेति ॥ पद्मपुराणे । नाष्टमी सप्तमीयुक्ता सप्तमी नाष्टमीयुता । नवम्या सह कार्या स्यादष्टमी नात्र संशय इति ॥ स्कन्दपुराणेऽपि ॥ अष्टमी नवमीमिश्रा कर्त्तव्या भूतिमिच्छता । सप्तम्या चाऽष्टमी चैव न कर्त्तव्या शिखिध्वजेति॥तान्येतानि ब्रह्मवैवर्तादिवचनानि यद्यपि पक्षद्वयसाधारण्येन पूर्वविद्धानिषेधमुत्तरविद्धाविधिं च कुर्वन्ति । तथाप्युदाहृतनिगमानुसारेण शुक्लपक्षविषयतया योजनीयानि । तथाच शुक्लपक्षाभिप्रायेणैव पूर्वविद्धां प्रतिषेधति जाबालिः— नागविद्धा तु या षष्ठी भानुविद्धो महेश्वरः । चतुर्दशी कामविद्धा

तिस्रस्ता मलिनाः स्मृता इति ॥ स्कन्दपुराणेऽपि—
नागविद्धा तु या षष्ठी सप्तम्या तु यदाऽष्टमी। भूतविद्धाप्यमावास्या न ग्राह्या मुनिपुङ्गवेति ॥ तथाच शुक्लपक्षमेवाभिप्रेत्योत्तरविद्धा विधीयते। विष्णुधर्मोत्तरे, एकादश्यष्टमी षष्ठी द्वितीया च चतुर्दशी। अमावास्या तृतीया च ता उपोष्याः परान्विता इति ॥ शङ्करगीतायां साक्षादेव शुक्लपक्षे परविद्धा विहिता। एकादश्यष्टमी षष्ठी शुक्लपक्षे चतुर्दशी। पूज्याः परेण संयुक्ताः पराः पूर्वेण संयुता इति ॥ कृष्णपक्षे पूर्वविद्धाविधिरुत्तरविद्धाप्रतिषेधश्च निगमे पठ्यते। कृष्णपक्षेऽष्टमी यत्र कृष्णपक्षे चतुर्दशी। पूर्वविद्धा तु कर्त्तव्या परविद्धा न कर्हिचित् ॥ उपवासादिकार्येषु ह्येष धर्मः सनातन इति ॥ नारदीये। कृष्णाष्टमी तथा रम्भा तृतीया वटपैतृकी। बृहत्तपा तथा ब्रह्मन् कर्त्तव्या संमुखी तिथिरिति ॥ अत्राष्टम्याः शुक्लकृष्णव्यवस्था सामान्येन सर्वव्रतविषया। व्रतविशेषस्याऽनुपादानात्। व्रतानि चोदाह्रियन्ते। तत्र वामनपुराणे नभोमासे कृष्णाष्टम्यां कालाष्टमीव्रतं पठितम्। विष्णुधर्मोत्तरे कृष्णपक्षे सन्तानाष्टमीव्रतम्। एतदुभयं यथोक्तरीत्या पूर्वविद्धायामनुष्ठेयम्। देवीपुराणे श्रावणमासे शुक्लाष्टम्यां देवीव्रतम्। गारुडपुराणे शुक्लाष्टम्यां नृसिंहव्रतम्। एतदुभयमुत्तरविद्धायामनुष्ठेयम्। एवमन्यान्यप्युदाहरणीयानि। व्रतविशेषाद् अष्टमीनिर्णयो द्विविधः। व्रतविशेषमात्रोपजीवनेन प्रवृत्त एकः। नक्षत्रादियोगं व्रतविशेषं चोपजीव्य प्रवृत्तोऽपरः। तत्र दूर्वाष्टमीसंज्ञितः कश्चिद् व्रतविशेषो भविष्यत्पुराणे पठ्यते। ब्रह्मन् भाद्रपदे मासि शुक्लाष्टम्यामुपोषितः। महेशं पूजयेद्यस्तु दूर्वया सहितं मुने इति ॥ अस्मिन् व्रतविशेषे शुक्लपक्षवर्तित्वेनोत्तरविद्धायां प्राप्तायामपवादमाह नारदः। धन्या कृष्णाष्टमी दूर्वा सावित्री वट-

पैतृकी । अनङ्गत्रयोदशी रम्भा कर्त्तव्या संमुखी तिथिरिति ॥ पद्मपुराणे । श्रावणी दुर्गनवमी तथा दूर्वाष्टमी च या । पूर्व-विद्धैव कर्त्तव्या शिवरात्रिर्बलेर्दिनमिति ॥ तथा शिवशक्तिमहोत्सवो नाम कश्चिद् व्रतविशेषः । तस्य पूर्वन्यायेन शुक्लकृष्णपक्षव्यव-स्थायां प्राप्तायां तदपवादः पद्मपुराणे पठ्यते । अष्टमी नवमी-विद्धा नवम्या चाष्टमीयुता । अर्द्धनारीश्वरप्राया उमामाहेश्वरी तिथिः ॥ अष्टमीनवमीयुग्मे महोत्साहे महोत्सवः । शिवशक्त्योः शिवक्षेत्रे पक्षयोरुभयोरपीति ॥ महानुत्साहो यस्मिन्निति बहुव्रीहिः। तत्पदं तिथियुग्मस्य क्षेत्रस्य वा विशेषणम् । यदा युग्मस्य विशेषणं तदा तादृशं युग्ममुपलभ्य सूर्यग्रहणार्द्धोदयादाविव मन-स्युत्साहं प्राप्य देवतोत्सवः कर्त्तव्य इत्युक्तं भवति। यदा तु क्षेत्र-विशेषणं तदा काशीश्रीगिर्यादौ यस्मिन् क्षेत्रे मनस्युत्साहो जायते तत्रोत्सवः कर्त्तव्य इत्युक्तं भवति । नक्षत्रादियोगिव्रतविशेषोप-जीवी निर्णय उदाह्रियते ॥ स्कन्दपुराणे व्रतविशेषः पठ्यते । मासि भाद्रपदे शुक्ले पक्षे ज्येष्ठर्क्षसंयुते । यस्मिन् कस्मिन् दिने कुर्याज्ज्येष्ठायाः परिपूजनमिति ॥ तस्य ज्येष्ठाव्रतस्य नक्षत्रयोग-वशेनाष्टमी ग्रहीतव्या । नाष्टमी सप्तमीविद्धा सप्तमी चाष्टमीयुता । नवम्या सह कार्या स्यादष्टमी नात्र संशयः ॥ मासि भाद्रपदे शुक्लपक्षे ज्येष्ठर्क्षसंयुता । रात्रिर्यस्मिन् दिने कुर्याज्ज्येष्ठायाः परि-पूजनमिति ॥ अयमर्थः । अष्टम्यां नक्षत्रयोगाभावे शुक्लपक्षवर्त्ति-त्वात् परैवाष्टमी ग्राह्या । यदा तु पूर्वदिने रात्रौ नक्षत्रयोगोऽस्ति तदा पूर्वविद्धा ग्राह्या ॥ सोऽयं शुक्लपक्षप्रयुक्तस्य सामान्य-शास्त्रस्य नक्षत्रप्रयुक्तविशेषशास्त्रेणापवाद इति ॥ योऽयं पूर्वदिने रात्रौ नक्षत्रयोगः सोऽपि क्वचिदपोद्यते । तथाच स्कन्दपुराणे । यस्मिन् दिने भवेज्ज्येष्ठा मध्याह्नादूर्ध्वमप्यणुः । तस्मिन् हविष्यं

पूजा च न्यूना चेत् पूर्ववासर इति ॥ अत्र केवलतिथितो नक्षत्रयोगस्य प्रशस्तत्वात् केवलतिथिप्रयुक्तं निर्णयमपोह्य यथा नक्षत्रप्रयुक्तो निर्णय आदृतस्तथा नक्षत्रयुक्ततिथौ वारविशेषयोगस्य ततोऽपि प्रशस्तत्वात्तेन निर्णयः कर्त्तव्यः। एतदेवाभिप्रेत्य स्कन्दपुराणे पठ्यते । नभोऽष्टम्यां यदा वारो भानोर्ज्येष्ठर्क्षमेव च। नीलज्येष्ठेति सा प्रोक्ता दुर्लभा बहुकालिकेति ॥ तदेवं त्रिधा निर्णयः संपन्नः। नृसिंहव्रतसन्तानाष्टमीव्रतादौ शुक्लकृष्णभेदेन निर्णयः। दूर्वाष्टम्यां व्रतविशेषेण निर्णयः। नीलज्येष्ठाष्टम्यां योगविशेषेण निर्णय इति ॥

तदेतन्निर्णयत्रयं दृष्टान्तीकृत्य जन्माष्टमी विचार्यते। सा किं पक्षभेदेन निर्णेतव्या, उत व्रतविशेषेण, आहोस्विद्योगविशेषेणेति। अत्रैवेदमपरं चिन्त्यते। किं जन्माष्टमीव्रतमेव जयन्तीव्रतम्, उत तयोर्भेद इति। तथा अन्यदपि चिन्तनीयम्। किं तिथ्यन्तरवदत्राह्वेधः, उत मध्यरात्रवेध इति। प्रथमं व्रतस्वरूपे निश्चिते पश्चादस्मिन् व्रते कीदृशी तिथिरित्याकाङ्क्षोदेति। तिथौ च पूर्वविद्धत्वेन वा निश्चितायां पश्चात् कीदृशो वेध इत्याकाङ्क्षा। तस्मादादौ व्रतं निश्चीयते। तत्र जन्माष्टमीजयन्तीशब्दाभ्यां व्यवह्रियमाणं व्रतमेकमेवेति तावत् प्राप्तम्। कुतः। रूपभेदाभावात्। यथा यागस्य द्रव्यदेवते रूपम्, यथा चोपासनस्य गुणविशेषैर्युक्ता देवता, यथा च तत्त्वविद्यायां वेद्यं तत्त्वं रूपम्। तथा व्रते नियमविशेषः स्वरूपम्। नियमश्चात्रोपवासजागरणं कृष्णपूजा चन्द्रार्घ्यदानमित्यादिलक्षणः। स चोभयत्र न भिद्यते। अथोच्येत रूपाभेदेऽपि नित्यकाम्ययोरिव भेदो भविष्यति। नित्या जन्माष्टमी। अकरणे प्रत्यवायस्मरणात्। तथाच स्मर्यते। गृध्रमांसं खगं काकं श्येनं च मुनिसत्तम। मांसं वा द्विपदा भुक्तं कृष्णजन्माष्टमीदिने ॥

जन्माष्टमीदिने प्राप्ते येन भुक्तं द्विजोत्तम । त्रैलोक्यसम्भवं पापं तेन भुक्तं द्विजोत्तमेति ॥ भविष्यत्पुराणे । श्रावणे बहुले पक्षे कृष्णजन्माष्टमीव्रतम् । न करोति नरो यस्तु भवति क्रूरराक्षसः ॥ कृष्णजन्माष्टमीं त्यक्त्वा योऽन्यद्व्रतमुपासते । नाप्नोति सुकृतं किञ्चिदिष्टापूर्तमथापि वा ॥ वर्षे वर्षे तु या नारी कृष्णजन्माष्टमीव्रतम् । न करोति महाप्राज्ञ व्याली भवति कानने ॥ स्कन्दपुराणेऽपि । ये न कुर्वन्ति जानन्तः कृष्णजन्माष्टमीव्रतम् । ते भवन्ति नराः प्राज्ञ व्याला व्याघ्राश्च कानने ॥ रटन्तीह पुराणानि भूयो भूयो महामुने ॥ अतीतानागतं तेन कुलमेकोत्तरं शतम् । पातितं नरके घोरे भुञ्जता कृष्णवासर इति ॥ जयन्ती च काम्या । फलविशेषस्मरणात् । विष्णुधर्मोत्तरे हि जयन्तीं प्रकृत्य पठ्यते । यद् बाल्ये यच्च कौमारे यौवने वार्द्धके तथा । बहुजन्मकृतं पापं हन्ति सोपोषिता तिथिरिति ॥ वह्निपुराणेऽपि । सप्तजन्मकृतं पापं राजन् यत्र त्रिविधं नृणाम् । तत्र क्षालयति गोविंदस्तिथौ तस्यां समर्चितः ॥ उपवासश्च तत्रोक्तो महापातकनाशनः । जयन्त्यां जगतीपाल विधिना नात्र संशय इति ॥ पद्मपुराणेऽपि । प्रेतयोनिगतानां तु प्रेतत्वं नाशितं नरैः । यैः कृता श्रावणे मासे अष्टमी रोहिणीयुता ॥ किं पुनर्बुधवारेण सोमेनापि विशेषत इति ॥ स्कन्दपुराणेऽपि । महाजयार्थं कुरुतां जयन्तीं मुक्तयेऽनघ । धर्ममर्थं च कामं च मोक्षं च मुनिपुङ्गव । ददाति वाञ्छितान् अर्थान्यानार्थं नातिदुर्लभमिति । भविष्योत्तरे जयन्तीकल्पे । प्रतिवर्षं विधानेन मद्भक्तो धर्मनन्दन । नरो वा यदि वा नारी यथोक्तफलमाप्नुयात् ॥ पुत्रसन्तानमारोग्यं सौभाग्यमतुलं भवेत् । इह धर्मरतिर्भूत्वा मृतो वैकुण्ठमाप्नुयादिति ॥ एवं जन्माष्टम्या अकरणे प्रत्यवायाज्जयन्त्याः फलविशेषाच्चोभयोः क्रमेण नित्यत्वं काम्यत्वं

वाभ्युपेतव्यमिति ॥ मैवम् । गुणफलाधिकारत्वाभ्युपगमेऽपि जयन्त्याः फलविशेषोपपत्तेः । गोदोहनदध्यादि तत्र दृष्टान्तः । चमसेनापः प्रणयेद्गोदोहनेन पशुकामस्येति नित्ययोर्दर्शपूर्णमासयोरपां प्रणयनं विधाय तदेवाश्रित्य पशुफलाय गोदोहनमात्रं विहितम् । दध्नेन्द्रियकामस्येत्यत्र च पूर्वप्रकृते नित्याग्निहोत्रे फलाय दधि विधीयते। एवं जन्माष्टमीमाश्रित्य फलविशेषाय जयन्तीनामको रोहिणीयोगो विधीयताम् । नच रोहिणीलक्षणस्य कालविशेषस्यानुपादेयत्वादविधेयत्वं शङ्कनीयम् । कालविशेषस्य स्वरूपेण पुरुषैरनुत्पाद्यत्वेऽप्यनुष्ठानाङ्गत्वं शास्त्रेणावगम्यानुष्ठानाय तत्प्रतीक्षायाः कर्त्तुं शक्यत्वात् । अन्यथा, वसन्ते वसन्ते ज्योतिषा यजेतेत्यादिकः सर्वोऽपि कालविधिर्लुप्येत । रोहिणीयोगस्य च जयन्तीनामकत्वं जयन्तीलक्षणप्रतिपादकैः स्मृतिवाक्यैरध्यवसेयम् । तानि च वाक्यान्युदाहरामः । विष्णुधर्मोत्तरे, रोहिणी च यदा कृष्णे पक्षेऽष्टम्यां द्विजोत्तम । जयन्ती नाम सा प्रोक्ता सर्वपापहरा तिथिरिति ॥ सनत्कुमारसंहितायाम् । शृणुष्वावहितो राजन् कथ्यमानं मयानघ । श्रावणस्य च मासस्य कृष्णाष्टम्यां नराधिप ॥ रोहिणी यदि लभ्येत जयन्ती नाम सा तिथिरिति ॥ स्कान्दे । प्राजापत्येन संयुक्ता अष्टमी तु यदा भवेत् । श्रावणे बहुले सा तु सर्वपापप्रणाशिनी ॥ जयं पुण्यं च कुरुते जयां पुण्यां ततो विदुरिति ॥ विष्णुरहस्ये । अष्टमी कृष्णपक्षस्य रोहिणी ऋक्षसंयुता । भवेत् प्रोष्ठपदे मासि जयन्ती नाम सा स्मृतेति ॥ पौर्णमास्यन्तेषु मासेषु स्वीकृतेषु श्रावण्यां पूर्णिमायां श्रावणमासस्य समाप्तत्वादुपरितनीं प्रतिपदमारभ्य भाद्रपदमास इत्यभिप्रेत्य प्रौष्ठपद इत्युक्तम् । विष्णुधर्मोत्तरे । प्राजापत्यर्क्षसंयुक्ता कृष्णा नभसि चाऽष्टमी । सोपवासो हरेः पूजां तत्र कृत्वा न सीदतीति ॥ वसिष्ठ-

संहितायाम् । श्रावणे वा नभस्ये वा रोहिणीसहिताऽष्टमी । यदा कृष्णा नरैर्लब्धा सा जयन्तीति कीर्त्तिता ॥ श्रावणे न भवेद्योगो नभस्ये तु भवेद् ध्रुवम् । तयोरभावे योगस्य तस्मिन् वर्षे न सम्भव इति ॥ अत्र श्रावणेति मुख्यः कल्पः । नभस्ये इत्यनुकल्पः । यदि वा श्रावणे यदि वा नभस्ये सर्वथापि रोहिणीकृष्णाष्टमीयोगो जयन्तीत्येतदविवादम् । पुराणान्तरे । रोहिणी च यदा कृष्णे पक्षेऽष्टम्यां द्विजोत्तम । जयन्ती नाम सा प्रोक्ता सर्वपापहरा तिथिरिति ॥ तदेवमेतैः स्मृतिवाक्यैर्जयन्त्याः कृष्णाष्टमीरोहिणीयोगे स्वरूपे सति पूर्वोदाहृतफलकामिनस्तादृशो योगो गोदोहनदध्यादिवद् गुणत्वेन विधीयते ॥ काम्ये तु ज्योतिष्टोमे गुणविशेषो न कोऽपि फलाय विहितः । अतः काम्यज्योतिष्टोमवैषम्याद्गोदोहनदध्यादिसाम्याच्च पूर्वोदाहृतफलवाक्यानि प्रकृते नित्ये जन्माष्टमीव्रते गुणफलप्रतिपादकत्वेनोपपद्यन्ते । तथा सति यथा दर्शपूर्णमासाभ्यामन्यः कश्चित् पशुफलको गोदोहनसंज्ञको यागो नास्ति, किं तु गुण एव केवलं गोदोहनम् । तथा न जन्माष्टमी व्रतादन्यज्जयन्तीव्रतं, किन्तु प्रकृत एव व्रते फलाय गुणविधिरित्येवं प्राप्ते ब्रूमः । व्रतद्वयमिदं भवितुमर्हति । कुतः । नामभेदात् । निमित्तभेदात् । रूपभेदात् । शुद्धमिश्रत्वभेदात् । निर्देशभेदाच्च । तथाहि । पूर्वोदाहृतेषु अकरणे प्रत्यवायप्रतिपादकस्मृतिवाक्येषु जन्माष्टमीव्रतमित्येव नाम व्यवहृतम् । तथा पूर्वोदाहृतेषु जयन्तीव्रतमिति नामव्यवहारः । नामभेदाच्च कर्मभेदो ज्योतिराधिकरणे व्यवस्थितः । अस्य चाधिकरणस्य संग्राहकावेतौ श्लोकौ भवतः— अथैष ज्योतिरित्यत्र गुणो वा कर्म वा पृथक् ॥ गुणः सहस्रदानात्मा ज्योतिष्टोमे ह्यनूदिते ॥ अथेति प्रकृते छिन्न एतच्छब्दोऽग्रगं वदेत् । संख्ययेवान्यकर्मत्वमुत्पत्तिगतसंज्ञयेति ॥

अयमर्थः। अथैष ज्योतिरथैष विश्वज्योतिरथैष सर्वज्योतिरेतेन सहस्रदक्षिणेन यजेतेति श्रुतम्। तत्र संशयः। किं प्रकृत एव ज्योतिष्टोमे सहस्रदक्षिणाऽऽख्यो गुणविधिः, उत यागान्तरविधिरिति। एष ज्योतिरेतेनेत्याभ्यामेतच्छब्दाभ्यां प्रकृतं ज्योतिष्टोममनूद्य तत्र गुणविधिरिति पूर्वः पक्षः। अर्थान्तरद्योतकेनाथशब्देन प्रकृतस्य ज्योतिष्टोमस्य विच्छेदः क्रियते। एतच्छब्दश्च प्रत्यासन्नं ब्रूते। प्रत्यासत्तिश्च द्विविधा। अतीता आगामिनी चेति। तत्रातीतायाः प्रत्यासत्तेर्विच्छेदे सति आगमिप्रत्यासत्तिपरत्वेनैतच्छब्दौ उपपन्नौ। तथाप्येककर्मत्वं मा भूत्, कर्मभेदे तु किं प्रमाणमितिचेत्। अपूर्वसंज्ञेति वदामः। एष ज्योतिरित्यस्मिन्नुत्पत्तिवाक्ये पूर्वप्रकृतकर्मविषयाया ज्योतिष्टोमसंज्ञाया अन्या ज्योतिरित्येषा संज्ञा श्रूयते। तत्र यथा पूर्वाधिकरणे सप्तदशप्राजापत्यान् पशूनालभेतेत्यत्रोत्पत्तिवाक्यगतया संख्यया कर्मभेदो निरूपितः, तथाऽत्राप्युत्पत्तिवाक्यगतया नूतनसंज्ञया कर्मभेदोऽभ्युपगन्तव्य इति। एवञ्च सति प्रकृतेऽप्यनेन न्यायेनोत्पत्तिवाक्यगताभ्यां जन्माष्टमीव्रतजयन्तीव्रतसंज्ञाभ्यां व्रतभेदोऽभ्युपगन्तव्यः। तथा निमित्तभेदादपि व्रतभेदः। जन्माऽष्टमीव्रते तिथिरेव निमित्तम्। जयन्तीव्रते तु रोहिणीयोगः। ननु जन्माष्टमीत्यस्मिन्नपि व्यवहारे योग एव विवक्षितव्यः। नक्षत्रयुक्तायामेव तिथौ देवकीनन्दनस्योत्पत्तेः। मैवम्। तज्जन्मन्यष्टम्या एव प्रधानप्रयोजकत्वात्। रोहिणीतद्योगयोर्विद्यमानयोरपि बुधवारादिवदुपलक्षणत्वात्। अत एव शास्त्रेषु जन्माष्टमीत्येव समाख्यायते। अन्यथा जन्मरोहिणी जन्मयोग इति वा समाख्यायेत। तत्सद्भावमात्रेण प्रयोजकत्वे बुधवारोऽपि प्रयोजकः स्यात्। अस्त्वितिचेन्न। अतिप्रसङ्गात्। तज्जन्मकाले द्वापरावसानस्य संवत्सरविशेषस्य च सद्भावेन तयोरपि प्रयोजक-

त्वं केन वार्येत । तस्माज्जन्मन्यष्टम्या एव प्राधान्यम् । तत्प्राधान्ये च श्रुतिलिङ्गादिषु षट्सु समाख्यारूपं षष्ठं प्रमाणमुपन्यस्तं वेदितव्यम् । तथा प्रत्यक्षादिषु सम्भवैतिह्यान्तेष्वष्टसु प्रमाणेष्वैतिह्यरूपमागमरूपं वा प्रमाणमुक्तं भवति । ननु निरर्थकोऽयं वाग्वादलक्षणः कोलाहलः । यद्येकं व्रतं, यदि वा व्रतद्वयमुभयथाप्यऽनुष्ठाने को नामातिशयः स्यात् । अस्त्येव महानतिशयः । यस्मिन् संवत्सरे श्रावणबहुलाष्टमी परित्यज्यान्यस्मिन्नवम्यादौ रोहिणी भवति तस्मिन् संवत्सरे जयन्ती स्वरूपेणैव नास्ति । अतो जयन्तीव्रतस्य तत्र लुप्तत्वात्तस्यैव जन्माष्टमीव्रतत्वे तदपि न प्राप्नुयात् । भेदपक्षे त्वसत्यामपि जयन्त्यां जन्माष्टमीव्रतं तत्र प्रवर्त्तत इत्ययमनुष्ठानेऽतिशयः । भवत्वेवं तथापि नोपन्यस्तो निमित्तभेदो व्रतभेदमावहति । कर्मभेदहेतुषु शब्दान्तराभ्याससंख्यागुणप्रक्रियानामधेयेषु षट्सु प्रमाणेषु निमित्तस्यानन्तर्भावादितिचेत् । मैवम् । तथाहि । पूर्वोक्तसंज्ञाभेदसंपादितं व्रतभेदं निमित्तभेदम् उपोद्बलयति । तस्मादत्र निमित्तभेदाद् व्रतभेदः । तथा रूपभेदादपि व्रतभेदोऽवगन्तव्यः। रूपभेदस्य कर्मभेदहेतुत्वमामिक्षाऽधिकरणे निर्णीतम् । अस्य चाधिकरणस्य संग्राहकावेतौ श्लोकौ भवतः । गुणः कर्मान्तरं वा स्याद् वाजिभ्यो वाजिनं त्विति *
गुणो देवाननूद्योक्तः समुच्चयविकल्पतः ॥ आमिक्षोत्पत्तिशिष्टत्वात् प्रबला तत्र वाजिनम् । गुणोऽप्रविश्य कर्मान्यत् कल्पयेद् वाजिदेवकमिति ॥ तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनमिति श्रुतम् । अम्लदधिसम्बन्धात् क्षीरनीरयोर्विभेदे सति यो घनीभूतः क्षीरांशः साऽऽमिक्षा । तस्याश्च विश्वेदेवा देवता । तत्र यत् पृथग्भूतं नीरं तद्वाजिनम् । तस्य च वाजिनो देवताः । तस्य वाक्यस्य आमिक्षान्तस्य प्रतिपाद्यम् ।

आमिक्षाद्रव्यकं विश्वेदेवदेवताकमेकं कर्म। तथा सति किमुपरितनेन वाजिभ्यो वाजिनमित्यनेन वाक्येन पूर्वस्मिन्नेव कर्मणि वाजिनं गुणो विधीयते उत, कर्मान्तरविधिरिति संशयः। तत्र वाजोऽन्नमामिक्षा। सा एषां देवानामस्ति ते वाजिन इति व्युत्पत्त्या प्रकृतान् देवाननूद्य वाजिनं गुणो विधीयते। सा चामिक्षया सह विकल्प्यते ? समुच्चयो वेति पूर्वः पक्षः। उत्पत्तिशिष्टामिक्षागुणावरुद्धस्य कर्मणो गुणान्तराकाङ्क्षाभावाद् वाजिनस्य तत्र प्रवेशोऽसम्भवे सत्यन्यथाऽनुपपन्नो वाजिनगुणो वाजिशब्दार्थस्य प्रकृतदेवताव्यतिरिक्तदेवत्वं कल्पयित्वा कर्मभेदे पर्यवस्यतीति सिद्धान्तः। तत्र यथा द्रव्यदेवतालक्षणस्य यागरूपस्य भिन्नत्वात् कर्मभेदः। तथा प्रकृतेऽपि रूपभेदात्तद्व्रतभेदोऽभ्युपगम्यताम्। उपवासमात्रं जन्माष्टमीस्वरूपं तदुत्पत्तिवाक्ये तन्मात्रस्य प्रतीयमानत्वात्। ननु जयन्तीव्रत एवोपवासं कुर्यादित्युत्पत्तिवाक्यं स्मर्यते, न तु जन्माऽष्टमीव्रते। बाढम्। तत्राप्यत्र विधिरुन्नेतव्यः। अन्यथा भोजने प्रत्यवायस्मरणानुपपत्तेः। स चोन्नीयमानो विधिरुपवासमात्रं विधत्ते, न तु मण्डपनिर्माणजागरणप्रतिमादानादिकम्। विधेरुन्नयनहेतुष्वकरणप्रत्यवायवाक्येषु भोजननिषेधमात्रस्मरणात्। न हि तत्र निद्रायां दानाभावे वा प्रत्यवायः स्मर्यते। अत उपवासमात्रं तत्र स्वरूपं, न तु दानादिकम्। अत एवाकरणे प्रत्यवायमभिधाय वाक्यशेषे जयन्तीप्रयुक्तदानादिशङ्काव्यावृत्तये केवलशब्द उपवासविशेषणत्वेन पठ्यते। केवलेनोपवासेन तस्मिन् जन्मदिने मम। शतजन्मकृतात् पापान्मुच्यते नात्र संशय इति ॥ तस्माज्जन्माष्टमीव्रतस्योपवासमात्रं स्वरूपम्। यदि शिष्टास्तत्रापि जागरणदानादिकमनुतिष्ठन्ति, अनुतिष्ठन्तु नाम। अविरुद्धैः पुण्यविशेषैर्व्रतस्य उपोद्बलनसम्भवात्। शास्त्रेण तु प्रापितमुपवासमात्रम्।

जयन्तीव्रतस्य तु दानादिसहित उपवासः स्वरूपम्। तद्विधायकेषु शास्त्रेषु तथाभिधानात्। तथाच वह्निपुराणे। तुष्ट्यर्थं देवकी-सूनोर्जयन्तीसम्भवं व्रतम्। कर्त्तव्यं वित्तमानेन भक्त्या भक्तजनै-रपीति॥ भविष्योत्तरेऽपि। मासि भाद्रपदेऽष्टम्यां निशीथे कृष्ण-पक्षगे। शशाङ्के वृषराशिस्थे ऋक्षे रोहिणिसंज्ञके॥ योगेऽस्मिन् वसुदेवाद्धि देवकी मामजीजनत्। तस्मान्मां पूजयेत् तत्र शुचिः सम्यगुपोषितः॥ब्राह्मणान् भोजयेद्भक्त्या ततो दद्याच्च दक्षिणाम्। हिरण्यं मेदिनीं गावो वासांसि कुसुमानि च॥ यद्यदिष्टतमं तत्त-त्कृष्णो मे प्रीयतामिति॥ भविष्यद्विष्णुधर्मोत्तरयोः जयन्त्या-मुपवासश्च महापातकनाशनः। सर्वैः कार्यो महाभक्त्या पूजनीयश्च केशव इति॥ वह्निपुराणे। कृष्णाष्टम्यां भवेद्यत्र कलैका रोहिणी यदि। जयन्ती नाम सा प्रोक्ता उपोष्या सा प्रयत्नत इति॥ स्मृत्यन्तरेऽपि। प्राजापत्यर्क्षसंयुक्ता श्रावणस्यासिताष्टमी॥ वर्षे वर्षे तु कर्त्तव्या तुष्ट्यर्थं चक्रपाणिन इति॥ नारदीयसंहितायां जयन्तीं प्रकृत्य स्मर्यते। उपोष्य जन्मचिह्नानि कुर्याज्जागरणं तु यः। अर्द्धरात्रयुताष्टम्यां सोऽश्वमेधफलं लभेदिति॥ एवमेतेषु विधिवाक्येषु दानादियुक्त उपवासो जयन्तीव्रतरूपत्वेन प्रतीयते। अतो रूपभेदाद् व्रतभेदः। तथा शुद्धमिश्रत्वभेदादपि द्रष्टव्यः। अकरणे प्रत्यवायमात्रस्मरणात्। शुद्धं नित्यं जन्माष्टमीव्रतम्। करणे फलविशेषस्मरणात्। अकरणे प्रत्यवायस्मरणाच्च। नित्य-त्वेन काम्यत्वेन च मिश्ररूपं जयन्तीव्रतम्। तत्र फलवाक्यानि पूर्वपक्ष एव प्रसङ्गादुदाहृतानि। अकरणे प्रत्यवायश्च जयन्तीं प्रकृत्य कस्मिंश्चित् पुराणे स्मर्यते। अकुर्वन् याति नरकं याव-दिन्द्राश्चतुर्दशेति॥ स्कन्दपुराणेऽपि। शूद्रान्नेन तु यत्पापं शवहस्त-स्यभोजने। तत्पापं लभते कुन्ति जयन्तीविमुखो नरः॥ब्रह्मघ्नस्य

सुरापस्य गोवधे स्त्रीवधेऽपि वा । न लोको यदि शार्दूल ! जयन्तीविमुखस्य च ॥ क्रियाहीनस्य मूर्खस्य परान्नं भुञ्जतोऽपि वा । न कृतघ्नस्य लोकोऽस्ति जयन्तीविमुखस्य च ॥ न करोति यदा विष्णोर्जयन्तीसम्भवं व्रतम् । यमस्य वशमापन्नः सहते नारकीं व्यथाम् ॥ जयन्तीवासरे प्राप्ते करोत्युदरपूरणम् । संपीड्यतेऽतिमात्रं तु यमदूतैः कलेवरम् ॥ यो भुञ्जीत विमूढात्मा जयन्तीवासरे नृपेति ॥ एतैरकरणप्रत्यवायवाक्यैर्नित्यत्वं च जयन्त्याः । नन्वेवमुक्तैरकरणप्रत्यवायवाक्यैः, केवलेनोपवासेनेति पापक्षयवाक्याच्च जन्माष्टमीव्रतमपि नित्यकाम्यं स्यात् । मैवम् । पापक्षयफलकत्वमात्रेण काम्यत्वे सन्ध्यावन्दनादेरपि काम्यत्वप्रसङ्गात् । अतः सत्यपि पापक्षये फलान्तरास्मरणेन केवलनित्यत्वं जन्माष्टमीव्रतस्य युक्तम् । ततः शुद्धमिश्रत्वभेदाद्व्रतयोर्भेदः । तथा निर्देशभेदादपि व्रतभेदो द्रष्टव्यः । निर्देशभेदश्च भृगुवाक्ये दृश्यते । जन्माष्टमी जयन्ती च शिवरात्रिस्तथैव च । पूर्वविद्धैव कर्त्तव्या तिथिभान्ते च पारणमिति ॥ यत्र जन्माष्टमी रोहिणी चेति पाठस्तत्रापि रोहिणीशब्देन तद्युक्ता तिथिर्विवक्षिता, न केवलं रोहिणी। तस्मिन् वाक्ये निर्दिष्टयोः पूर्वोत्तरयोर्जन्माष्टमीशिवराज्योस्तिथित्वाद् यद्येकमेव व्रतं स्यात्तर्हि निर्देशभेदो नोपपद्येत । ननु व्रतभेदेऽप्यस्ति दोषः । यदा दिनद्वये अष्टमी वर्तते रोहिणी तूत्तरदिन एव तदा पूर्वदिने जन्माष्टम्युपवासः । परेद्युर्जयन्त्युपवास इति नैरन्तर्येणोपवासद्वयं प्रसज्ज्येत । प्रसज्ज्यतां नाम । प्रमाणवत्त्वादितिचेत् । परदिने भोजनोपवासलक्षणविरुद्धधर्मप्रसङ्गात् । उपवासस्याङ्गं पारणमिति हि वक्ष्यते । तथाच जन्माऽष्टम्युपवासाङ्गस्य पारणस्य जयन्त्युपवासस्य चैकत्र प्राप्तिः । सोऽयमेको दोषः । व्यतिरेकानुपलम्भश्चापरो दोषः । तथाहि । यथा

जयन्तीव्यतिरिक्ता जन्माष्टम्युपलभ्यते तथा जन्माष्टमीव्यतिरिक्ताऽपि जयन्ती क्वापि वत्सरे उपलभ्येत, न त्वेवमुपलभ्यतेऽतो व्रतभेदोऽपि दुष्ट एव । अत्रोच्यते।न तावद् पारणोपवाससाङ्कर्यलक्षणदोषोऽस्ति । आघ्राणोदकपानादिना पारणे सम्पादितेऽप्युपवासभङ्गाभावाद । अन्यथा द्वादशीपारणा त्रयोदशीनक्तयोः क्वचिद् साङ्कार्य्यं केन वार्येत । नाप्युपवासद्वयनैरन्तर्य्यम् । रोहिणीसंयोगसम्भवे जन्माष्टम्या अपि तत्रैव कर्त्तव्यत्वाद ।सर्वत्र तिथिनक्षत्रयोगस्य केवलतिथेरुत्कृष्टत्वेन केवलायास्तिथेस्तत्रोपेक्षणीयत्वाद । अत एव व्यतिरेकानुपलम्भोऽप्यलङ्काराय, न तु दोषाय। जन्माष्टम्या रोहिणीनिरपेक्षत्वेन व्यतिरेक उपलभ्यतां नाम। जयन्त्यास्तु योगरूपत्वेन रोहिण्यामिवाष्टम्यामपि सापेक्षत्वेन कथं व्यतिरेकशङ्कावकाशस्तस्माद् व्रतद्वयपक्षे न कोऽप्यस्ति दोषः। किञ्च, यदा रोहिणीयोगोऽस्ति तदा जन्माष्टमीजयन्त्योः सह प्रयोगस्यावश्यम्भावित्वेन जयन्तीव्रत एव जन्माष्टमीव्रतमन्तर्भवति । तस्मादपि नोपवासद्वयप्रसङ्गः । तदेवं व्रतभेदे दोषाभावात्तत्साधकानां च नामभेदादीनां पञ्चानां हेतूनां सद्भावाद् व्रतभेद एवावश्यमभ्युपेयः । व्रतैक्यभ्रमस्तु तयोरुक्तयुक्त्यनुसन्धानाभावादष्टम्युपवाससादृश्याच्च केषाञ्चिदुदेति । सादृश्यं च गुणविकृतित्वादाश्रयाश्रयिभावाच्च सम्भाव्यते। यथा दर्शयागस्य गुणविकृतिः साकम्प्रस्थायीयको यागः । तत्र दर्शयागे यावन्तोऽङ्गाऽङ्गिविषयाः प्रयोगास्ते सर्वेऽपि साकम्प्रस्थायीये विद्यन्ते । भेदस्तु स्वल्प एव भवति । दर्शयागे सान्नायहविषोर्दधिपयसोः पृथगवदानम् । साकं प्रस्थायीये तु सहैव प्रस्थानम् । एतावता भेदेन गुणविकृतिरित्यभिधीयते । तथाग्निष्टोमस्य गुणविकृतिरुक्थ्यः । अग्निष्टोमे द्वादश स्तोत्राणि । उक्थ्ये त्वधिकानि त्रीणि । ततो

गुणाधिक्याद् गुणविकृतित्वम्। एवमत्रापि जन्माष्टम्यामुपवासोऽनुष्ठेयः। जयन्त्यां तु दानादिरधिको गुणः। अतः सा गुणविकृतिः। आश्रयाश्रयिभावश्च ज्योतिष्टोमे तदङ्गावरुद्धोपासने दृष्टः। तत्र ज्योतिष्टोम आश्रयः। तस्याङ्गान्युक्थ्योद्गीथानि। तत्रोक्थं नाम बह्वृचाध्यायिना होत्रा शस्यमानमाज्यमरुत्वतीयनिष्कैवल्यादिनामकं शस्त्रम्। तच्चोक्थमाश्रित्य बह्वृचब्राह्मणोपनिषद्युपासनानि विहितानि। तथाच श्रुतिः। उक्थमुक्थ्यमिति वै प्रजा वदन्ति तदिदमेवोक्थ्यानि यमेव पृथिवीति। अहमुक्थ्यमस्मीतिविद्यादिति च। उद्गीथिनो नाम सामवेदिनोद्गात्रा यागे गीयमानः साम्नो भागविशेषः। तं चोद्गीथमाश्रित्य छान्दोग्योपनिषद्युपासनानि विहितानि। ओँमित्येतदक्षरमुद्गीथमुपासीतेति। एवं प्रकृतेऽपि जन्माष्टमीव्रते येयं श्रावणकृष्णाष्टमी तामाश्रित्य रोहिणीयोगानिमित्तदानादिकं जयन्तीव्रते विधीयते। अतो गुणविकृतित्वेनाश्रयाश्रयिभावेन च सादृश्यसाद्भावादनयोर्व्रतयोरैक्यभ्रमो मन्दबुद्धेर्जायतां नाम। प्रमाणन्यायदर्शिभिस्तु सर्वथैव व्रतभेदोऽङ्गीकार्य इति सिद्धम्। यदेतद्विचारत्रयं पूर्वमुत्क्षिप्तं व्रतभेदे तिथिनिर्णये वेधे चेति तत्र व्रतभेदो निर्णीतः॥

अथ तिथिर्निर्णेतव्या॥ तन्निर्णयश्च वेधाधीनः। अतो वेधः पूर्वमभिधीयते। तिथ्यन्तरेष्वह्न एव प्रायेण कर्मकालत्वादुदयास्तमयवेलायां त्रिमुहूर्त्तवेधः सामान्येन निरूपितः। पञ्चम्यां तु विशेषः षण्मुहूर्त्तवेधो दर्शितः। जन्माष्टम्या जयन्त्याश्च रात्रिप्रधानत्वाद् रात्रियोगः प्रशस्तः। एतच्च जाबालिवृद्धगौतमाभ्यां दर्शितम्। अहस्सु तिथयः पुण्याः कर्मानुष्ठानतो दिवा। नक्तादिव्रतयोगेषु रात्रियोगो विशिष्यत इति॥ यद्यप्युपवासव्रतत्वादहनि रात्रौ च मुख्यत्वं युक्तितः सामर्थ्यसिद्धं, तथाप्यर्द्धरात्रस्य मुख्यकालत्वमुक्तं

वसिष्ठसंहितायाम् । अष्टमी रोहिणीयुक्ता निशार्द्धे दृश्यते यदि । मुख्यकाल इति ख्यातस्तत्र जातो हरिः स्वयमिति ॥ एवं सत्यर्द्धरात्रसद्भावे एवात्र कर्मकालत्वमिति स्वमभिधीयते । तदेवाभिप्रेत्य विष्णुरहस्ये दृश्यते । रोहिण्यामर्द्धरात्रे तु यदा कृष्णाष्टमी भवेत् तस्यामभ्यर्चनं शौरेर्हन्ति पापं त्रिजन्मजमिति ॥ तस्मिन्नर्द्धरात्रे कियत् परिमाणमपेक्षितमित्यपेक्षायामादित्यपुराणे दर्शितम् । अर्द्धरात्रादधश्चोर्ध्वं कलयाऽपि यदा भवेत् । जयन्ती नाम सा प्रोक्ता सर्वपापप्रणाशिनीति ॥ वराहसंहितायामपि । सिंहेऽर्के रोहिणीयुक्ता नभःकृष्णाष्टमी यदि । रात्र्यर्द्धपूर्वापरगा जयन्ती कलयाऽपि चेति ॥ रात्रेरर्द्धं रात्र्यर्द्धम् । पूर्वं चापरं च पूर्वापरे । रात्र्यर्द्धं च ते पूर्वापरे च रात्र्यर्द्धपूर्वापरे । तयोर्गच्छति वर्त्तत इति रात्र्यर्द्धपूर्वापरगा, घटिकाया अशीत्यधिकशततमो भागः । अष्टादशनिमेषास्तु काष्ठा त्रिंशत्तु ताः कालाः * तास्तु त्रिंशत् क्षणस्ते तु मुहूर्तो द्वादशास्त्रियामित्यमरः ॥ तथाच पलतृतीयो भागः कला भवति । तावता परिमाणेन पूर्वार्द्धावसाने उत्तरार्द्धादौ च वर्त्तमाना ग्रहीतव्या । खण्डतिथिरूपा कृष्णाष्टमी द्विविधा । पूर्वेद्युः सप्तमीयुक्ता परेद्युर्नवमीयुक्ता चेति । तत्र सप्तमीयुक्तायां रात्रिपूर्वार्द्धावसाने कलासद्भावो विधीयते । उत्तरार्द्धादौ स्वतः सिद्धत्वेनाविधेयत्वात्तद्विपर्ययेण नवमीयुक्तायामुत्तरार्द्धादौ कलासद्भावो विधीयते । पूर्वार्द्धावसानकलायाः सप्तमीयुतविषयत्वं विष्णुधर्मोत्तरे स्पष्टमभिहितम् । रोहिणीसहिता कृष्णा मासि भाद्रपदेऽष्टमी । सप्तम्यामर्द्धरात्राधः कलयाऽपि यदा भवेत् ॥ तत्र जातो जगन्नाथः कौस्तुभी हरिरीश्वरः । तमेवोपवसेत् कालं कुर्यात्तत्रैव जागरमिति ॥ इयमष्टमी कृष्णपक्षादिमासविवक्षया भाद्रपदे भवति । सैवाष्टमी शुक्लपक्षादिमासविवक्षया श्रावणे भवति । अत

एव योगीश्वरः। रोहिणीसहिता कृष्णा मासे च श्रावणेऽष्टमी अर्द्धरात्रादधश्चोर्ध्वं कलयाऽपि यदा भवेत्॥ जयन्ती नाम सा प्रोक्ता सर्वपापप्रणाशिनीति॥ कलाया अतिसूक्ष्मत्वेन दुर्लक्ष्यत्वात् स एव पक्षान्तरमाह। अर्द्धरात्रादधश्चोर्ध्वमेकाऽर्द्धघटिकान्विता। रोहिणी चाष्टमी ग्राह्या उपवासव्रतादिष्विति॥ एका चार्द्धघटिका चैकार्द्धघटिके ताभ्यां समन्विता। कलामपेक्ष्यार्द्धघटिका स्थूला। तामपेक्ष्य घटिका स्थूला। तत्रायमर्थः सम्पद्यते। पूर्वभागावसान एका घटिका। उत्तरभागादौ चैका। मिलित्वा तन्निशीथशब्द-वाच्यं मुहूर्त्तम्। तावत्परिमाणं सर्वैरपि सुलक्ष्यत्वान्मुख्यः कल्पः। तदसम्भवेऽर्द्धघटिकान्वेष्टव्या। तस्याप्यसम्भवे कलेति। तत्र मुख्यं पक्षमभिप्रेत्य भविष्योत्तरे, निशीथे कृष्णपक्षग इत्युक्तम्। तच्च वचनं साकल्येन पूर्वमेवोदाहृतम्। अत्र जयन्त्यां चन्द्रार्घ्य-स्यावश्यकर्त्तव्यत्वात्तस्य च चन्द्रोदयकालीनत्वान्निशीथयोगः प्र-शस्तः। एतदेव विष्णुधर्मोत्तरेऽभिहितम्। अर्द्धरात्रे तु योगोऽयं तारापत्युदये तथा। नियतात्मा शुचिः स्नातः पूजां तत्र प्रवर्त्तये-दिति॥ सोऽयमर्द्धरात्रयोगो मुख्यः कल्पः। यस्तु कृत्स्नाहोरात्र-योगः सोऽयं मुख्यतरः। यश्च यदा कदाचिदीषद्योगः सोऽनु-कल्पः। स च वसिष्ठसंहितायां दर्शितः। अहोरात्रं तयोर्योगो ह्यसम्पूर्णो भवेद्यदि। मुहूर्त्तमप्यहोरात्रे योगश्चेत्तामुपोषयेदिति॥ पुराणान्तरेऽपि। रोहिणी च यदा कृष्णे पक्षेऽष्टम्यां द्विजोत्तम। जयन्ती नाम सा प्रोक्ता सर्वपापहरा तिथिः॥ वासरे वा निशायां वा यत्र स्वल्पाऽपि रोहिणी। विशेषेण नभोमासे सैवोपोष्या मनीषिभिरिति॥ योऽयं जयन्तीव्रते योगनिर्णयः स एव जन्मा-ष्टमीव्रतेऽपि द्रष्टव्यः। यस्मिन् वत्सरे योगो नास्ति तस्मिन् वत्सरे जन्माष्टमीव्रतमेकमेव प्रवर्त्तते। तत्रापि नेतराष्टमीवद्दिवसे वेधः,

किन्त्वर्द्धरात्रवेधः । तथाच तस्मिन्नेव पुराणान्तरे । दिवा वा यदि वा रात्रौ नास्ति चेद्रोहिणी कला । रात्रियुक्तां प्रकुर्वीत विशेषेणेन्दुसंयुताम् ॥ अन्यत्रापि, अष्टमी शिवरात्रिश्च ह्यर्द्धरात्रादधो यदि । दृश्यते घटिका या सा पूर्वविद्धा प्रकीर्त्तितेति ॥ इति वेधो निरूपितः ॥

अथ ग्राह्या तिथिर्निरूप्यते ॥ सा च वत्सरभेदेन द्विधा भवति । रोहिणीरहिता रोहिणीयुक्ता चेति । तत्र या रोहिणीरहिताऽष्टमी साऽपि द्विविधा। शुद्धा सप्तमीविद्धा चेति। सूर्योदयमारभ्य प्रवर्तमानाऽष्टमी शुद्धा । निशीथादर्वाक् सप्तम्या कियसापि युक्ता विद्धा । शुद्धापि पुनर्निशीथव्याप्त्यव्याप्तिभ्यां द्विविधा । तत्र निशीथव्यापिनी जन्माष्टमी व्रते मुख्या । विशेषेणेन्दुसंयुतामिति वचनात् । निथीथव्याप्तिरहिताऽपि । रात्रियुक्तां प्रकुर्वीतेति वचनेन ग्रहीतव्या भवति । ननु पूर्वेद्युर्निशीथादूर्ध्वमारभ्य परेद्युर्निशीथादर्वाग् या समाप्यते । तस्या उभयत्र रात्रिसम्बन्धित्वात् कुत्रोपवास इतिचेत् । परेद्युरिति ब्रूमः । उभयत्र निशीथव्याप्त्यऽभावस्य रात्रिसम्बन्धस्य च तुल्यत्वेऽपि परेद्युः प्रातः सङ्कल्पकालमारभ्य वर्त्तमानतया प्राशस्त्यं द्रष्टव्यम् । सप्तमीविद्धापि त्रिविधा। पूर्वेद्युरेव निशीथव्यापिनी । परेद्युरेव निशीथव्यापिनी । उभयत्र व्यापिनी चेति। तत्र प्रथमद्वितीययोः पक्षयोर्निशीथव्याप्तेःप्रयोजकत्वेन या निशीथव्यापिनी सा, विशेषेणेन्दुसंयुतामिति वचनेन ग्रहीतव्या भवति । या तु दिनद्वयेऽपि निशीथव्यापिनी तस्यामुभयत्र निशीथयोगस्य रात्रियोगस्य च तुल्यत्वान्नानेन वचनेन निर्णयः सम्भवति । नाऽपि कृष्णपक्षेऽष्टमी चैवेत्यादिभिरष्टमीमात्रमुपजीव्य प्रवृत्तैर्निर्णेतुं शक्यते। तेषामहर्वेधविषयत्वात्। अन्यथा व्रतान्तरेष्वपि निशीथवेधः प्रसज्ज्येत । तस्मान्न्यायः परिशिष्यते ।

न्यायश्च परेद्युरुपवासं प्रापयति। सङ्कल्पकालमारभ्य तिथिसद्भावात्। नच साकल्याभिधायिवचनेन पूर्वेद्युरपि सङ्कल्पकाले तिथिरस्तीति शङ्कनीयम्। तस्या मुख्यतिथित्वाभावात्। किञ्च, सा तिथिः सकला ज्ञेया यस्यामस्तमितो रविरिति वचनं निशीथव्यापिनीमष्टमीं न विषयीकरोति। तस्मात् परेद्युरेवोपवासः। तदेवं चतुर्विधा रोहिणीरहिता अष्टमी निर्णीता। अथ रोहिणीसहिताष्टमी निर्णीयते। साऽपि चतुर्विधा। शुद्धा, विद्धा, शुद्धाधिका, विद्धाऽधिका चेति। तत्र शुद्धायां सम्पूर्णयोगो निशीथयोगो यत्किञ्चिन्मुहूर्त्तयोगश्चेति त्रैविध्यं भवति। एवं विद्धायामपि द्रष्टव्यम्। एतेषु षट्सु भेदेषु दिनान्तरे योगाभावादुपवासे सन्देहो नास्ति। किं तु केवलं योगतारतम्यात् प्राशस्त्यतारतम्यं भवति। यत्किञ्चिन्मुहूर्त्तयोगः प्रशस्तः। अर्द्धरात्रयोगः प्रशस्ततरः। सम्पूर्णयोगः प्रशस्ततमः। सर्वेष्वपि योगेषु योगमुपजीव्योपवासो विहितो विष्णुरहस्ये। प्राजापत्यर्क्षसंयुक्ता कृष्णा नभसि चाष्टमी। मुहूर्त्तमपि लभ्येत सोपोष्या सुमहाफला॥ मुहूर्त्तमप्यहोरात्रे यस्मिन् युक्तं हि दृश्यते। अष्टम्या रोहिणीऋक्षं तां सुपुण्यामुपावसेदिति॥ शुद्धाधिका तु सूर्योदयमारभ्य प्रवृत्ता। परेद्युः सूर्योदयमतिक्रम्यैषद्वर्द्धते। सा च त्रिविधा। पूर्वेद्युरेव रोहिणीयुक्ता। परेद्युरेव रोहिणीयुक्ता। दिनद्वयेऽपि रोहिणीयुक्ता चेति। तत्राऽऽद्ययोर्द्वयोः पक्षयोर्नास्त्युपवाससन्देहः। रोहिणीयुक्ताया द्वितीयकोटेरभावात्। तृतीयपक्षे तु रोहिणीयोगस्योभयत्र समानत्वेऽपि गुणाधिक्यात् पूर्वैवोपोष्या। गुणाधिक्यं च दर्शयिष्यते। येयमत्रोपोष्यत्वेनोक्ता पूर्वा तिथिः, साऽपि रोहिणीयोगभेदात् त्रिधा भिद्यते। अष्टमीवत् सूर्योदयमारभ्य प्रवृत्ता रोहिणी कदाचित्परेद्युरपि कियती वर्द्धते। कदाचित् पूर्वेद्युर्निशीथमारभ्य रोहिणी प्र-

वर्त्तते । कदाचिन्निशीथादूर्ध्वमारभ्य प्रवर्त्तते । तत्र प्रथमपक्षे सम्पूर्णयोगत्वमेको गुणः । सङ्कल्पकालमारभ्य कृत्स्नकर्मकालव्याप्तिरपरो गुणः । निशीथव्याप्तिस्तृतीयो गुणः । नचैते त्रयो गुणाः परेद्युः सम्भवन्ति । द्वितीयपक्षे निशीथे जयन्तीसद्भावो गुणः । नच परेद्युः सोऽस्ति । तृतीयपक्षे दिनद्वयेऽपि निशीथे योगो नास्ति । पूर्वेद्युः केवलाऽष्टमी । परेद्युः केवला रोहिणी । तत्राष्टम्याः प्राधान्यात् प्राबल्यमभ्युपेयम् । सर्वत्र हि जयन्तीवाक्येषु रोहिणीसहिताष्टमीति व्यवहारोऽष्टमीसहिता रोहिणीति व्यवहाराभावाच्च तिथिनक्षत्रयोः क्रमेण प्रधानोपसर्ज्जनभावोऽवगन्तव्यः । अतो गुणाधिक्याच्छुद्धाधिका पूर्वैवोपोष्या । निशीथादर्वाक् सप्तम्या युक्ता परेद्युरपि विद्यमाना विद्धाऽधिका । नन्वत्र निशीथवेधो ग्राह्य इत्युक्तम् । बाढम् । वेध्याया अष्टम्या निशीथे सद्भावोऽत्र निशीथवेधः । न तु वेधिकायाः सप्तम्याः सद्भावः । विद्धाधिकायामपि पक्षत्रयम् । द्वयोः पक्षयोः सन्देहाऽभावश्च पूर्ववद्योजनीयः । तत्र या पूर्वेद्युरेव रोहिणीयुक्ता विद्धाऽधिका तस्यामुपवास आदित्यपुराणे स्मर्यते । विना ऋक्षं न कर्त्तव्या नवमीसंयुताऽष्टमी । कार्या विद्धाऽपि सप्तम्या रोहिणीसंयुताऽष्टमीति ॥ विष्णुधर्मेऽपि । जयन्ती शिवरात्रिश्च कार्ये भद्राजयान्विते । कृत्वोपवासं तिथ्यन्ते तथा कुर्याच्च पारणमिति ॥ गारुडपुराणेऽपि । जयन्त्यां पूर्वविद्धायामुपवासं समाचरेत् । तिथ्यन्ते चोत्सवान्ते वा व्रती कुर्वीत पारणमिति ॥ या परेद्युरेव रोहिणीयुक्ता विद्धाधिका तत्र उपवासः पूर्वतिथौ न युक्तः । रोहिणीयोगाभावात् । परेद्युस्तु तत्सद्भावात्पूर्वोदाहृतेन प्राजापत्यादिना विष्णुरहस्यवचनेनोपवासो विधीयते । या तूभयत्र रोहिणीयुक्ता विद्धाधिका, साऽपि निशीथे जयन्तीयोगमपेक्ष्य चतुर्द्धा

भिद्यते । पूर्व्वेद्युरेव निशीथे योगवती । परेद्युरेव तादृशी । उभयत्र निशीथयोगरहिता चेति । तत्र या पूर्व्वेद्युरेव निशीथयोगवती सा पूर्व्वोपोष्या । तदुक्तं पद्मपुराणे । कार्या विद्धापि सप्तम्या रोहिणीसहिताऽष्टमी । तत्रोपवासं कुर्व्वीत तिथिभान्ते च पारणमिति ॥ अत्रावशिष्टेषु त्रिषु पक्षेषु परदिन एवोपवासः । तत्र दिनद्वये निशीथयोगमभिलक्ष्य ब्रह्मवैवर्त्ते पठ्यते । वर्जनीया प्रयत्नेन सप्तमीसंयुताऽष्टमी । सा सर्क्षाऽपि न कर्त्तव्या सप्तमी संयुताष्टमी ॥ अविद्धायां तु सर्क्षायां जातो देवकीनन्दन इति ॥ यदा दिनद्वयेऽपि निशीथयोगे परत्रोपवासस्तदा किमु वक्तव्यम् । परेद्युरेव निशीथयोगे दिनद्वयेऽपि निशीथयोगराहित्यं बहुधा जायते । तद्यथा । पूर्व्वेद्युर्निशीथादूर्द्ध्वं तिथिनक्षत्रद्वयं प्रवृत्तम् । तच्च परेद्युर्निशीथादर्व्वागेव समाप्तमित्येकः प्रकारः । पूर्व्वेद्युर्निशीथादर्व्वागेव नक्षत्रं प्रवृत्तम् । अष्टमी तु निशीथादूर्द्ध्वं प्रवृत्तेत्यपरः । अष्टमी च निशीथादर्व्वाक् प्रवृत्ता । ऋक्षं च निशीथादूर्द्ध्वं प्रवृत्तम् । परेद्युर्निशीथादर्व्वागेव समाप्तमिति तृतीयः पक्षः । त्रिष्वप्येतेषु प्रकारेषु परैवोपोष्या । दिनद्वयेऽप्यर्द्धरात्रियोगाविषये पूर्व्वमुदाहृतस्य, वर्जनीया प्रयत्नेनेति वचनस्यात्रापि सञ्चारयितुं शक्यत्वात् । किञ्च, प्रथमप्रकारे न्यायोऽप्युपोद्बलकोऽस्ति । संकल्पकालमारभ्य तिथिनक्षत्रयोगस्य बहुकाले व्यापित्वात् प्रशस्तत्वं द्रष्टव्यम् । द्वितीयप्रकारे परेद्युरष्टमीबाहुल्येऽपि नक्षत्रयोगस्याल्पत्वादनुपादेयत्वमित्याशङ्का न कर्त्तव्या । अत एव स्कन्दपुराणे पठ्यते । सप्तमीसंयुताष्टम्यां भूत्वा ऋक्षं द्विजोत्तम । प्राजापत्यं द्वितीयेऽह्नि मुहूर्त्तार्द्धं भवेद्यदि ॥ तदाष्टयामिकं ज्ञेयं प्रोक्तं व्यासादिभिः पुरा इति ॥ तृतीयप्रकारे परेद्युर्नक्षत्रबाहुल्येऽप्यष्टमीयोगस्याल्पत्वादनुपादेयत्वमित्याशङ्का भवति । सा च पद्मपुराणे निवर्त्त्यते । पूर्व-

विद्धाऽष्टमी या तु उदये नवमीदिने । मुहूर्तमपि संयुक्ता सम्पूर्णा साऽष्टमी भवेत् ॥ कला काष्ठा मुहूर्त्ताऽपि यदा कृष्णाष्टमी तिथिः । नवम्यां चैव ग्राह्या स्यात् सप्तमीसंयुता न हीति ॥

तदेवं जन्माष्टमीभेदा जयन्तीभेदाश्च निरूपिताः । तत्र जयन्तीभेदेषूपवासदिने यदि सोमवारो बुधवासरो वा भवति तदा फलाऽऽधिक्यं भवति । तदुक्तं पद्मपुराणे । प्रेतयोनिगतानां तु प्रेतत्वं नाशितं नरैः । यैः कृता श्रावणे मासि अष्टमी रोहिणीयुता ॥ किं पुनर्बुधवारेण सोमेनाऽपि विशेषतः । किं पुनर्नवमीयुक्ता कुलकोट्यास्तु मुक्तिदेति ॥ स्कन्दपुराणेऽपि । उदये चाष्टमी किञ्चिन्नवमी सकला यदि । भवेत्तु बुधसंयुक्ता प्राजापत्यर्क्षसंयुता ॥ अपि वर्षशतेनापि लभ्यते यदि वा न वेति ॥ विष्णुधर्मोत्तरेऽपि । अष्टमी बुधवारेण रोहिणीसहिता यदा । भवेत्तु मुनिशार्दूल किं कृतैर्व्रतकोटिभिरिति ॥ यथोक्तरीत्या विहिततिथावुपवासं कृत्वा परेद्युः पारणेनोपवासं समापयेत् । पार तीर कर्मसमाप्ताविस्समाद्धातोर्निष्पन्नः पारणशब्दः । यद्यप्यसौ समाप्तिमात्रमभिदधाति, तथाप्युपवाससमाप्तावेव लोकशास्त्रयोः प्रयोगात् पङ्कजादिशब्दवद्योगरूढो द्रष्टव्यः । तथाच योगरूढ्योपवासस्य चरमाङ्गं भोजनमभिधत्ते । अङ्गत्वं चोपवासविधिवाक्येषु, तिथिभान्ते च पारणमिति विधानादवगन्तव्यम् । नच रागप्राप्तस्य भोजनस्यानेन वचनेनोपवासाङ्गतिथिनक्षत्रशेषयोर्निषेधः क्रियते, न तु पारणनामकं किञ्चिदङ्गं विधीयत इति शङ्कनीयम् । तथा सति पारणशब्दप्रयोगानुपपत्तेः । रागप्राप्ते हिं अभ्यवहरणे भोजनशब्दः । तत्र पारणशब्देन रागप्राप्तभोजनविवक्षायां मुख्यार्थो बाधितः स्यात् । किञ्च, यदि पारणमङ्गं न स्यात्तदा प्रतिनिधिविधानं नोपपद्येत । तद्विधानं च द्वादशीप्रस्तावे देवलेन स्मर्यते । सङ्कटे विषमे प्राप्ते

द्वादश्यां पारयेत् कथम्। अद्भिस्तु पारणं कुर्यात् पुनर्भुक्तं न दोषकृदिति ॥ अतः पारणशब्दबलात् प्रतिनिधिबलाच्च पारणस्याङ्गत्वं द्रष्टव्यम्। अत एवादित्यपुराणे। पारणान्तं व्रतं ज्ञेयं व्रतान्ते द्विजभोजनम्। असमाप्ते व्रते पूर्वे नैव कुर्याद् व्रतान्तरमिति ॥ तच्च पारणमुपवासदिनात् परदिने पूर्वाह्णे कर्त्तव्यम्। उपवासेषु सर्वेषु पूर्वाह्णे पारणं भवेदिति देवलस्मरणात्। एवं सामान्यतः पूर्वाह्णे पारणप्राप्तौ क्वचिदपवादाय तिथिभान्ते च पारणमित्यभिधीयते। शुद्धाधिकायां पूर्वेद्युरेव जयन्तीयोगः। उभयत्रापि जयन्तीयोग इत्यनयोः पक्षयोः पूर्वेद्युरेवोपवासविधानात् परेद्युः केवलतिथेस्तिथिनक्षत्रयोर्वा सद्भावात्तदन्ते पारणविधिः ॥ तथा शुद्धाधिकाविद्धाधिकयोरपि यदा परेद्युरेव जयन्तीयोगस्तदा परतिथावुपवासविधानात् पारणदिने तिथ्यभावेऽपि कदाचिन्नक्षत्राऽवशेषसम्भवात्तदन्ते पारणं विधीयते। तिथेर्वा नक्षत्रस्य वा शेषकाले पारणं ब्रह्मवैवर्त्ते प्रतिषिध्यते। अष्टम्यामथ रोहिण्यां न कुर्यात् पारणं क्वचित्। हन्यात् पुराकृतं कर्म उपवासार्जितं फलम् ॥ तिथिरष्टगुणं हन्ति नक्षत्रं च चतुर्गुणम्। तस्मात् प्रयत्नतः कुर्यात्तिथिभान्ते च पारणमिति ॥ स्कन्दपुराणेऽपि। तिथिनक्षत्रनियमे तिथिभान्ते च पारणम्। अतोऽन्यथा पारणे तु व्रतभङ्गमवाप्नुयादिति ॥ तिथिभान्तश्च द्विविधः— उभयान्त, एकतरान्तश्चेति। दिनद्वये जयन्तीयोगवत्यां शुद्धाधिकायां परदिने अष्टमीमुहूर्त्तत्रयं नातिक्रामति। रोहिणी तु पूर्वेद्युर्निशीथादर्वाग्यदाकदाचित् प्रवृत्ता तदनुसारेण परेद्युः समाप्येत। तत्र यदि दिवैव समाप्येत तदा तामतिक्रम्यैव पारणं कुर्यात्। उभयान्तस्य मुख्यत्वात्। यदि रात्रौ समाप्तिस्तदा तत्समाप्तिर्न प्रतीक्षणीया। रात्रिपारणस्य निषिद्धत्वात्। तथाच ब्रह्मवैवर्त्ते। सर्वेष्वेवोपवासेषु

दिवा पारणमिष्यते । अन्यथा पुण्यहानिः स्याद्दृते धारणपारणमिति ॥ अन्यतिथ्यागमो रात्रौ तामसस्तैजसो दिवा । तामसे पारणं कुर्वंस्तामसीं गतिमश्नुत इति ॥ दिवापारणं कुर्वन्नपि नाष्टमीवेलायां कुर्यात् । एकतरान्तस्याप्यभावात् । अष्टमीमतिवाह्य रोहिण्यां वर्तमानायामपि पारणं कुर्यात् । अत एव नारदीये । तिथिनक्षत्रसंयोग उपवासो यदा भवेत् । पारणं तु न कर्त्तव्यं यावन्नैकस्य संक्षयः ॥ सांयोगिके व्रते प्राप्ते यत्रैकोऽपि वियुज्यते । तत्रैव पारणं कुर्यादेवं वेदविदो विदुरिति ॥ पूर्वेद्युरेव निशीथे जयन्तीयोगवत्यां विद्धाधिकायां पारणदिने तिथिभान्ते बहुधा संभाव्यते । अहन्युभयान्त एकतरान्तो वा । रात्रावेकतरान्त उभयान्तो वेति । तेषु चतुर्षु भेदेषु निर्णयः स्मर्यते । तिथ्यर्क्षयोर्यदा छेदो नक्षत्रान्तमथापि वा । अर्द्धरात्रेऽपि वा कुर्यात् पारणं च परेऽहनीति ॥ दिवसे यद्युभयान्तस्तदा पारणमिति मुख्यः कल्पः । नक्षत्रान्तमित्यनेनैकतरान्तत्वं विवक्षितम् । सोऽयमनुकल्पः । यदि रात्रौ निशीथे उभयान्त एकतरान्तो वा भवति । तदा दिवसे मुख्यानुकल्पयोरुभयोरप्यसंभवाद्रात्रौ च पारणस्य निषिद्धत्वादर्थादुपवासप्राप्तौ पारणस्य प्रतिप्रसवः क्रियते । अर्द्धरात्रेऽपि वा कुर्यादिति । ननु पारणेऽष्टम्यन्तस्य प्रतीक्षणीयत्वेऽपि रोहिण्यन्तो न प्रतीक्षणीयः । याः काश्चित्तिथयः प्रोक्ताः पुण्यनक्षत्रसंयुताः । ऋक्षान्ते पारणं कुर्याद्विना श्रवणरोहिणीमिति स्मरणात् ॥ मैवम् । नक्षत्रं तु चतुर्गुणमिति प्रत्यवायस्योदाहृतत्वात् । तस्माद्विना श्रवणरोहिणीमिति वचनं केवलनक्षत्रोपवासविषयं, पूर्वोक्तानुकल्पविषयं वेत्यवगन्तव्यम् । अशक्तस्य तु तिथिनक्षत्रयोरनुवर्तमानयोरपि प्रातर्देवं संपूज्य क्रियमाणं पारणं न दुष्यति । तिथ्यन्ते वोत्सवान्ते वा व्रती कुर्वीत पारणमिति

स्मरणात् । इति जयन्तीनिर्णयः ॥

अथ नवमी निर्णीयते ॥ सा च विधिनिषेधरूपाभ्यामन्वयव्यतिरेकाभ्यां पूर्वविद्धैव ग्राह्या । तद्विधिश्च युग्मादिशास्त्रे वसुरन्ध्रयोरिति पठ्यते । पद्मपुराणेऽपि, अष्टम्या नवमीविद्धा नवम्या चाष्टमीयुता । अर्द्धनारीश्वरप्राया उमामाहेश्वरी तिथिः ॥ भविष्यत्पुराणे द्वादशीकल्पेऽपि । नवम्या सह कार्या स्यादष्टमी नवमी तथेति ॥ निषेधस्तु पद्मपुराणेऽभिहितः । न कार्या नवमी तात दशम्या तु कदाचनेति ॥ सेयं नवमी भविष्यत्पुराणोक्तदुर्गाव्रतादौ द्रष्टव्या । ननु कृष्णनवम्याः पूर्वविद्धत्वेऽपि शुक्लनवमी परविद्धास्तु। शुक्लपक्षे तिथिर्ग्राह्या यस्यामभ्युदितो रविरिति वचनात् । मैवम् । पूर्वोक्तेषु वचनेषु दशमीविद्धायाः साक्षान्निषेधात् । ननु तस्य निषेधस्य सामान्यरूपत्वात् कृष्णपक्षे सङ्कोचोऽस्त्विति चेन्न । सङ्कोचहेतोर्भवदुदाहृतस्यापि सामान्यरूपत्वात् पक्षयोरुभयोरपि पूर्वविद्धैव ग्राह्या । रामनवमी तु, चैत्रशुद्धाऽत्र नवमी पुनर्वसुयुता यदि । सैव मध्याह्नयोगेन महापुण्यतमा भवेत् ॥ नवमी चाष्टमीविद्धा त्याज्या विष्णुपरायणैः । उपोषणं नवम्यां वै दशम्यां पारणं भवेदिति वचनादष्टमीविद्धा सनक्षत्राऽपि नोपोष्या ॥ इति नवमीनिर्णयः ॥

अथ दशमी निर्णीयते ॥ तस्यां च तिथ्यन्तरवद्धेयोपादेयविभागो नास्ति । तिथ्यन्तरे तु काचित् पूर्वविद्धा ग्राह्या । काचिदुत्तरविद्धा । न तु तथा दशम्यां किञ्चिन्नियामकमस्ति । एतदेवाभिप्रेत्याङ्गिरा आह । सम्पूर्णा दशमी ग्राह्या परया पूर्वयाऽथवा । युक्ता न दूषिता यस्मात्तिथिः सा सर्वतो मुखीति ॥ यथा सम्पूर्णा दोषरहिता तथा विद्धापि । प्रतिपत्संमुखी कार्येत्यादौ तिथेर्मुखं पूज्यमुक्तम् । दशम्यास्तु मूलाग्रयोर्द्वयोरपि

मुख्यत्वात् पूज्यत्वमुभयत्र समानम् । एवं स्थिते सत्यत्रेदं चिन्त्यते । किं पुरुषेच्छया पूर्वोत्तरविद्धयोरन्यतरा ग्राह्या । किं वा नियामकं शास्त्रमस्तीति । तत्र न तावच्छास्त्रं किञ्चित् पश्यामः प्रत्युत सर्वतोमुख्यत्वकथनात् पूर्वोत्तरविद्धयोरुभयोः समबलत्वं शास्त्रेण प्रतीयते । अतो व्रीहिभिर्यजेत यवैर्वेत्यादिवदैच्छिको विकल्पोऽवगन्तव्यः । नचाष्टदोषग्रस्तत्वाद्विकल्पो न युक्त इति शङ्कनीयम् । गत्यन्तराभावेन दोषग्रस्तस्याप्यवश्याश्रयणीयत्वात् ॥ तदुक्तमाचार्यैः । एवमेषोऽष्टदोषोऽपि यद् व्रीहियववाक्ययोः । विकल्प आश्रितस्तत्र गतिरन्या न विद्यत इति ॥ तस्मादैच्छिको विकल्प इति प्राप्ते ब्रूमः । अस्त्यत्र वचनं व्यवस्थापकम् । तथाच मार्कण्डेयः।शुक्लपक्षे तिथिर्ग्राह्या यस्यामभ्युदितो रविः। कृष्णपक्षे तिथिर्ग्राह्या यस्यामस्तमितो रविरिति ॥ नन्वनेन वचनेन पक्षभेदेन विकल्प आश्रितः । तथा सति दोषाष्टकस्य तादवस्थ्यादैच्छिकविकल्प एव कुतो न स्वीक्रियत इतिचेन्मैवम् । सति व्यवस्थापके शास्त्रे पुरुषेच्छाया अप्रसरात् । अत एव स्मर्यते । उदासीने तु शास्त्रार्थे पुरुषेच्छानियामिकेति * । ननु पक्षभेदेन व्यवस्थानुपपन्ना। स्कन्दपुराणे पूर्वविद्धाया एव ग्राह्यत्वाभिधानात् । दशमी चैव कर्त्तव्या सदुर्गा द्विजसत्तमेति ॥ सदुर्गा नवमीमिश्रा ॥ मैवम् । पक्षद्वये पूर्वविद्धास्वीकारे पूर्वया परयाऽथवेति परविद्धाविधानस्य निरवकाशत्वप्रसङ्गात् । नवमीमिश्रत्ववचनं तु कृष्णपक्षे चरितार्थम् । ननु परविद्धानिषेधो ब्रह्मवैवर्त्ते पठ्यते। प्रतिपत्पञ्चमी भूता सावित्री वटपूर्णिमा । नवमी दशमी चैव नोपोष्या परसंयुता इति ॥ कूर्मपुराणे । नन्दाविद्धा तु या पूर्णा द्वादशी मकरे सिता । भृगुणा नष्टचन्द्रा च एता वै निष्फलाः स्मृताः ॥ अत्रैकादश्या नन्दात्वाद्दशम्याश्च पूर्णात्वादेकादशी-

विद्धा दशमी निष्फलेति गम्यते । बाढम् । अयमपि निषेधः पूर्वोत्तरन्यायेन कृष्णपक्षविषयतया योजनीयः। तस्मात् पूर्वोत्तरविद्धयोर्दशम्योः पक्षभेदेन व्यवस्था द्रष्टव्या॥ इति दशमीनिर्णयः॥

अथैकादशी निर्णीयते ॥ तत्रैकादश्यामुपवासो दानादिकं चेत्युभयं विहितम् । उपवासो जयन्तीवन्नित्यकाम्यरूपः । द्वैविध्यं च तस्य द्विविधप्रमाणबलादवसीयते । उपवासविधिवाक्येषु नित्यशब्दसदाशब्दादीनां नित्यत्वसाधकानां स्मरणान्नित्यत्वसिद्धिः। तानि च साधकानि सङ्ग्रहकारेण सङ्गृहीतानि। नित्यं सदा यावदायुर्न कदाचिदतिक्रमेद् ॥ इत्युक्त्वाऽतिक्रमे दोषश्रुतेरत्यागचोदनात् ॥ फलाश्रुतेर्वीप्सया च तन्नित्यमिति कीर्त्तितमिति ॥ अत्र च नित्यशब्दादीन्यष्टौ नित्यत्वसाधकानि । नित्यशब्द उदाहृतो गारुडपुराणे, उपोष्यैकादशी नित्यं पक्षयोरुभयोरपीति। सदाशब्द उक्तः सनत्कुमारसंहितायाम्, एकादशी सदोपोष्या पक्षयोः शुक्लकृष्णयोरिति ॥ यावदायुःशब्द उक्तो विष्णुरहस्ये, द्वादशी न प्रमोक्तव्या यावदायुः सुवृत्तिभिरिति। आग्नेयपुराणेऽपि उपोष्यैकादशी राजन् यावदायुः सुवृत्तिभिरिति । अतिक्रमनिषेधः कण्वेन दर्शितः । एकादश्यामुपवसेन्न कदाचिदतिक्रमेदिति ॥ विष्णुरपि, एकादश्यां न भुञ्जीत कदाचिदपि मानव इति ॥ अकरणे दोषमाह सनत्कुमारः, न करोति यदा मूढ एकादश्यामुपोषणम् । स नरो नरकं याति रौरवं तमसा वृतम् ॥ एकादश्यां मुनिश्रेष्ठ यो भुङ्क्ते मूढचेतनः । प्रतिमासं स भुङ्क्ते तु किल्बिषं श्वादिविट्समम् ॥ निष्कृतिर्मद्यपस्योक्ता धर्मशास्त्रे मनीषिभिः । एकादश्यन्नकामस्य निष्कृतिः क्वापि नोदिता ॥ मद्यपानान्मुनिश्रेष्ठ पातैव नरकं व्रजेत् । एकादश्यन्नकामस्तु पितृभिः सह मज्जतीति ॥ नारदीये, यानि कानि च पापानि ब्रह्महत्यासमानि

च । अन्नमाश्रित्य तिष्ठन्ति सम्प्राप्ते हरिवासरे ॥ तानि पापान्यु- पाश्नाति भुञ्जानो हरिवासर इति ॥ स्कान्दे, मातृहा पितृहा वाऽपि भ्रातृहा गुरुहा तथा । एकादश्यां तु यो भुङ्क्ते पक्षयोरुभयोरपि ॥ अकरण इवासमापनेऽपि दोष उक्तो विष्णुरहस्ये । समादाय विधानेन द्वादशीव्रतमुत्तमम् । तस्य भङ्गं नरः कृत्वा रौरवं नरकं व्रजेत् ॥ परिगृह्य व्रतं सम्यगेकादश्यादिकं नरः । न समापयते तस्य गतिः पापीयसी भवेदिति । नारदीयेऽपि द्वादशीव्रतमादाय व्रतभङ्गं करोति यः । द्वादशाब्दं व्रतं चीर्णं निष्फलं तस्य जायते इति ॥ अत्यागचोदना दर्शिता विष्णुरहस्ये, परमापदमापन्नो हर्षे वा समुपस्थिते । सूतके मृतके चैव न त्यजेद् द्वादशीव्रतमिति ॥ फलाश्रवणं च केषुचिद्वचनेषु विस्पष्टम् । तत्र कात्यायनः । एकादश्यां न भुञ्जीत पक्षयोरुभयोरपीति । स्कान्दे, उपोष्यैकादशी सम्यक् पक्षयोरुभयोरपीति ॥ वीप्सा कूर्मपुराणेऽपि । वदन्तीह पुराणानि भूयो भूयो वरानने । न भोक्तव्यं न भोक्तव्यं संप्राप्ते हरिवासर इति ॥ वीप्सामाह सनत्कुमारः । पक्षे पक्षे च कर्त्तव्यमेकादश्यामुपोषणमिति ॥ नारदोऽपि । नित्यं भक्तिसमायुक्तैर्नरैर्विष्णुपरायणैः । पक्षे पक्षे च कर्त्तव्यमेकादश्यामुपोषणमिति ॥ तदेवं नित्यशब्दादिभिरुपवासस्य नित्यत्वं सिद्धम् । काम्यत्वं च सायुज्यादिफलश्रवणादवगम्यते। तदुक्तं विष्णुरहस्ये। यदीच्छेद्विष्णुसायुज्यं सत्त्वात् संपदमात्मनः । एकादश्यां न भुञ्जीत पक्षयोरुभयोरपीति । कूर्मपुराणे । यदीच्छेद्विष्णुसायुज्यं श्रियं सन्ततिमात्मनः । एकादश्यां न भुञ्जीत पक्षयोरुभयोरपीति ॥ कात्यायनः, संसारसागरोत्तारमिच्छन् विष्णुपरायणः । ऐश्वर्यं सन्ततिं स्वर्गं मुक्तिं वा यद्यदिच्छति ॥ एकादश्यां न भुञ्जीत पक्षयोरुभयोरपीति ॥ स्कन्दपुराणेऽपि,

यदीच्छेद्विपुलान् भोगान् मुक्तिं चासन्तदुर्लभाम्। एकादश्यामुपवसेत् पक्षयोरुभयोरपीति ॥ नारदीयेऽपि, एकादशीसमं किञ्चित् पापत्राणं न विद्यते। स्वर्गमोक्षप्रदा ह्येषा राज्यपुत्रप्रदायिनी ॥ सुकलत्रप्रदा ह्येषा शरीरारोग्यदायिनीति। तदेवं फलश्रवणात् काम्यत्वं सिद्धम्। ननु काम्यत्वमनित्यत्वमसति कामे परित्यक्तुं शक्यत्वात्। तथा सत्येकस्य कर्मणो नित्यत्वकाम्यत्वाभ्यां द्वैरूप्याङ्गीकारे नित्यानित्यसंयोगविरोधः प्राप्नोति। नायं दोषः। खादिरवत् प्रमाणद्वयेन द्वैरूप्योपपत्तेः। तथाहि। खादिरो यूपो भवतीति क्रतौ नित्यः खादिरो विहितः। खादिरं वीर्यकामस्य यूपं कुर्वीतेति तस्मिन्नेव क्रतौ काम्यत्वेन चाऽनित्यः खादिरो विहितः। तत्र यथा प्रमाणद्वयसंबन्धादेकस्यापि खादिरस्य द्वैरूप्यमङ्गीकृतं तद्वदत्रापि द्विविधप्रमाणसद्भावादुपवासस्य द्वैरूप्यं किन्न स्यात्। ननु विषमो दृष्टान्तः। नित्यः खादिरः क्रत्वर्थः। काम्यस्तु पुरुषार्थः। उपवासस्तु नित्योऽपि पुरुषार्थ एव। तस्य खादिरवत् क्रत्वङ्गबोधकप्रमाणाभावात्। बाढम्। अस्त्वेवं वैषम्यं प्रयोजकं तु द्वैरूप्ये प्रमाणद्वयमस्त्येव। सूत्रकारेण प्रमाणद्वयस्यैव द्वैरूप्यसाधकत्वोपन्यासात्। तथाच सूत्रम्, एकस्य तूभयत्वे संयोगपृथक्त्वमिति। अतः केवलपुरुषार्थस्याप्युपवासस्य द्वैरूप्यमविरुद्धम्। यदि बुद्ध्या दोहस्य सदृशो दृष्टान्तोऽपेक्षितस्तर्ह्यग्निहोत्रादिर्दृष्टान्तोऽस्तु। न हि अग्निहोत्रं क्रत्वर्थम्। तस्य स्वयमेव क्रतुत्वात्। तस्य च नित्यत्वकाम्यत्वे वाक्यद्वयादवगम्येते। यावज्जीवमग्निहोत्रं जुहोतीति नित्यत्वावगमकं वाक्यम्। अग्निहोत्रं जुहुयात् स्वर्गकाम इति च काम्यत्वावगमकम्। तस्य च क्रत्वर्थत्वाभावेन केवलं पुरुषार्थतैव। अतोऽग्निहोत्रे नित्यत्वं काम्यत्वं चेति द्वैरूप्यमस्ति। तच्च शब्दान्तराभ्यासादिकर्मभेदहेत्वभावेनैक-

स्यैव कर्मणः प्रयोगभेदादवगन्तव्यम् । प्रयोगभेदश्च यावज्जीवा-ऽधिकरणे निर्णीतः । तस्य चाधिकरणस्य संग्राहकावेतौ श्लोकौ भवतः— यावज्जीवं जुहोतीति धर्मः कर्मणि पुंसि वा । काल-त्वाद कर्मधर्मोऽतः काम्य एकः प्रयुज्यताम् । न कालो जीवनं तेन निमित्तं प्रविभागतः । काम्यप्रयोगो भिन्नः स्याद्यावज्जीवप्रयोगत इति ॥ अयमर्थः । अग्निहोत्रं जुहुयाद स्वर्गकाम इति काम्या-ऽग्निहोत्रं श्रूयते । तथा वाक्यान्तरं पठ्यते । यावज्जीवमग्निहोत्रं जुहोतीति । तत्र संशयः । किं यावज्जीवमित्यनेनाधिकारान्तरं बोध्यते, किं वा काम्याग्निहोत्रे गुणविधिरिति । तदर्थमर्थान्तर-चिन्ता, किं वा यावज्जीवमित्यस्यार्थः कर्मधर्मः, उत पुरुषधर्म इति । यावज्जीवशब्देन पुरुषायुषपरिमितः कालोऽभिधीयते । काम्येन चाग्निहोत्रेण कालविशेष आकाङ्क्षितः । तस्य च काल-स्यानेन समर्पणादयं कर्मधर्मः । तस्माद् गुणविधिः । तथाचा-ऽग्निहोत्रस्य काम्यस्य प्रयोग एक एव, न त्वन्यो नित्य इति प्राप्ते ब्रूमः । यावज्जीवशब्दो न कालस्य वाचकः, किं तु लक्षकः । वाच्यार्थस्तु कृत्स्नजीवनम् । तच्च न कर्मधर्मत्वेन विधातुं शक्यम् । पुरुषधर्मत्वादिति प्राणधारणमभिधत्ते, न तु कालम् । प्राण-धारणं च पुरुषधर्मः । कालस्य तदसंभवाद । तेन स्वर्गकामेनेव जीवनमपि किञ्चिन्निमित्तम् । तस्मादधिकारान्तरचोदना । तथा स-ति जीवननिमित्तो नित्यः प्रयोगः । कामनिमित्तः कादाचि-त्कः प्रयोगश्च परस्परं भिद्यत इति सिद्धान्तः । तेनाग्निहोत्र-न्यायेन प्रकृतस्याप्युपवासस्य निमित्तभेदेन नित्यप्रयोगः काम्य-प्रयोगश्चास्तु । नन्वेकस्य कर्मणः कालभेदेन कर्तृभेदेन वा विना द्वौ प्रयोगौ न भवतः । नचात्र कालभेदः सम्भवति । नित्य-काम्ययोरुपवासयोरुभयोरप्येकादश्यामेव विधानाद । नाप्यत्र

कर्तृभेदोऽस्ति। यद्यपि काम्यं परित्यज्य केवलं नित्यमनुष्ठातुं शक्यं, तथापि काम्यमनुतिष्ठतामुना नित्यस्य परित्यक्तुमशक्यत्वात्। अतः कर्त्रैक्यात् कालैक्याच्च नित्यकाम्यरूपौ द्वौ प्रयोगौ न घटेते। नाऽयं दोषः। विविदिषाधिकरणन्यायेन सकृदेवानुष्ठिते प्रयोगद्वयसिद्धेः। तस्य चाधिकरणस्य संग्राहकावेतौ श्लोकौ भवतः— विद्यार्थमाश्रयार्थं च द्विःप्रयोगोऽथवा सकृत्। प्रयोजनविभेदेन प्रयोगोऽपि विभिद्यते॥ श्राद्धार्थभुक्त्या तृप्तिः स्याद्विद्यार्थेनाश्रमस्तथा। अनित्यनित्यसंयोग उक्तिभ्यां खादिरे मत इति॥ अयमर्थः। तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसा नाशकेनेति श्रुतिस्मृतिषु प्रसिद्धम्। श्रुतिवाक्ये परमात्मविद्यायां यज्ञादयो विहिताः। गृहस्थाद्याश्रमधर्मत्वं तु यज्ञादीनां सर्वश्रुतिस्मृतिषु प्रसिद्धम्। तत्र संशयः। किं यज्ञादीनां द्विःप्रयोग उतसकृदिति। तत्र प्रयोजनभेदात् प्रयोगभेद इति पूर्वः पक्षः। निमन्त्रितेन ब्राह्मणेन क्रियमाणस्य भोजनस्य द्वे प्रयोजने। अन्यकर्तृकश्राद्धनिष्पत्तिः, स्वतृप्तिश्च। न च द्विर्भुज्यते। तद्वद्ब्रह्मविद्यार्थमनुष्ठितेन यज्ञादिकर्मणा प्रयोजनद्वयं सिद्ध्यति। न च नित्यानित्यसंयोगविरोधः खादिरवद्वाक्यद्वयेन। तच्च पूर्वमुपपादितम्। तस्मात् सकृदेव प्रयोग इति। एवमत्रापि सकृदेवोपवासं कुर्वतः काम्यप्रयोगो नित्यप्रयोगश्चेत्युभयं सिद्ध्यति। ननु सकृदनुष्ठानेनानेकार्थसिद्धिर्द्वेधा भवति। तन्त्रेण वा प्रसङ्गेन वा। तद्यथा दर्शपूर्णमासयोः षण्णां प्रधानयागानां त्रयाणां त्रयाणां सकृत्सकृदनुष्ठितेन प्रयाजाद्यङ्गेनोपकारः सिद्ध्यति। तदिदं तन्त्रम्। पश्वर्थमनुष्ठितेन प्रयाजादिना पशुतन्त्रमध्यपातिनः पशुपुरोडाशस्याप्युपकारः सिद्ध्यति। सोऽयं प्रसङ्गः। एवं सति प्रकृतेऽपि तन्त्रप्रसङ्गयोः कतरस्योपादानमिति चेत्। प्रसङ्गस्येति

ब्रूमः । काम्यप्रयोगेणैव नित्यप्रयोगस्यापि सिद्धत्वात् । तथाच स्मृतिः । काम्येऽपि नित्यसिद्धिः स्यात् प्रसङ्गेनोभयात्मक इति । तदेवमेकादश्युपवासस्य नित्यत्वकाम्यत्वलक्षणद्वैरूप्यविरोधाभावाद् द्वैरूप्यमभ्युपेयमिति स्थितम् ।

अत्रोपवासाङ्गतिथिनिर्णयस्य वेधाधीनत्वात् प्रथमं दशमी-वेधो निरूप्यते । स च वेधस्त्रिविधः— अरुणोदयवेधः, सूर्योदय-वेधः, पञ्चदशनाडीवेधश्चेति । तत्रारुणोदयवेधो भविष्यत्पुराणे दर्शितः । अरुणोदयकाले तु दशमी यदि दृश्यते । सा विद्धैका-दशी तत्र पापमूलमुपोषणमिति ॥ अरुणोदयवेलायां दिशागन्धो भवेद्यदि । दुष्टं तत्तु प्रयत्नेन वर्जनीयं नराधिपेति ॥ गारुडपुराणे-ऽपि, दशमीवेधसंयुक्तो यदि स्यादरुणोदयः । नैवोपोष्यं वैष्ण-वेन तद्दिनैकादशीव्रतमिति ॥ अरुणोदयस्य प्रमाणं स्कन्दनारदा-भ्यामुक्तम् । उदयात् प्राक् चतस्रस्तु नाडिका अरुणोदय इति ॥ तस्मिन्नरुणोदयवेधा बहुविधास्ते प्रश्नोत्तराभ्यां ब्रह्मवैवर्त्ते दर्शिताः। कीदृशस्तु भवेद्वेधो योगो विप्रेन्द्र कीदृशः । योगवेधौ ममाचक्ष्व याभ्यां दुष्टमुपोषणम् ॥ चतस्रो घटिकाः प्रातररुणोदयनिश्चयः । चतुष्टयविभागोऽत्र वेधादीनां किलोदितः॥ अरुणोदयवेधः स्यात् सार्द्धं तु घटिकात्रयम् । अतिवेधो द्विघटिकः प्रभासन्दर्शनाद्रवेः ॥ महावेधोऽपि तत्रैव दृश्यतेऽर्को न दृश्यते । तुरीयस्तत्र विहितो योगः सूर्योदये सतीति। अयमर्थः। वेधातिवेधमहावेधयोगवेधाश्चत्वार उ-पवासस्य दूषकाः।तत्र रवेः प्रभासंदर्शनात् पूर्वं सार्द्धं घटिकात्रय-मेकादश्या व्याप्तम् ।ततः प्राचीने घटिकार्द्धे अरुणोदयसम्बन्धिनी-दशमीसद्भावे वेध इत्युच्यते। यदा सूर्यस्य दर्शनात् पूर्वं घटिका-द्वयमुपरितनमेकादशीव्याप्तं, पूर्वं तु घटिकाद्वयं दशमीव्याप्तं, तदानीमतिवेध इत्युच्यते। यदा सूर्यस्य दर्शनादर्शनसन्देहकाल-

मेकादशी प्राप्नोति । ततः प्राक् कृत्स्नोऽप्यरुणोदयकालो दशमी-व्याप्तस्तदा महावेधः । यदा सूर्योदये स्पष्टे सति पश्चादेकादशी प्रवृत्ता, ततः प्राच्यामुदयवेलायां दशमी विद्यते तदा योग-शब्देनाभिधेयो दोषो भवति । स च वेधाद्यपेक्षया तुरीयो भव-तीति। नन्वरुणोदयात् पूर्वमर्द्धरात्रात् परतोऽपि दशमीकला विद्यते, तदा नोपवासःकर्त्तव्यः। तदभावे तूपवासः कर्तव्यः। तथाच स्मृतिः। अर्द्धरात्रात् परा यत्र एकादश्युपलभ्यते।तत्रोपवासः कर्त्तव्यो,नतु वै दशमीकलेति ॥ अतो यथानिर्दिष्टेभ्योऽन्योऽपि कश्चिद्वेधोऽस्ती-तिचेद्, मैवम् । अर्द्धरात्रे वेधोऽपि यदा वर्ज्यस्तदा किमु वक्त-व्यमरुणोदयवेध इति वक्तुमर्द्धरात्रवेध उपन्यस्तो, न तु वेधाभि-प्रायेण । तदेव ब्रह्मवैवर्त्ते शौनकेन स्पष्टीकृतम्।अर्द्धरात्रे तु केषा-ञ्चिद्दशम्या वेध इष्यते । अरुणोदयवेलायां नाऽवकाशो वि-चारणे ॥ कपालवेध इत्याहुराचार्या ये हरिप्रियाः ।न तन्मम मतं यस्मात् त्रियामा रात्रिरिष्यत इति॥ य एते वेधातिवेधमहावेधयोगाः पूर्वमभिहितास्तेषु त्रयोऽरुणोदयवेधाश्चतुर्थ उदयवेधः। तच्चोदय-वेधं कण्वोऽप्याह । उदयोपरि विद्धा तु दशम्यैकादशी यदा । दानवेभ्यः प्रीणनार्थं दत्तवान् पाकशासन इति ॥ स्मृत्यन्तरेऽपि दशम्याः प्रान्तमादाय यदोदेति दिवाकरः । तेन स्पृष्टं हरिदिनं दत्तं जम्भासुराय त्विति ॥ पञ्चदशनाडीवेधस्तु स्कन्दपुराणे दर्शितः । नागो द्वादशनाडीभिर्दिक्पञ्चदशभिस्तथा । भूतोऽष्टा-दशनाडीभिर्दूषयत्युत्तरां तिथिमिति ॥ तदेवं वेधत्रयं निरूपितम् । तत्र पञ्चदशनाडीवेधस्य वेधान्तरस्य च विषयव्यवस्था निगमे दर्शिता । सर्वप्रकारवेधोऽयमुपवासस्य दूषकः । सार्द्धसप्तमुहूर्त्तस्तु वेधोऽयं बाधते व्रतमिति ॥ सर्वप्रकार इत्यत्र प्रकारशब्देन कला-काष्ठादयो वेधातिवेधादयो वा गृह्यन्ते॥ नात्र तिथ्यन्तरवत् त्रिमु-

हूर्त्तत्वं वेधेऽपेक्षितं, किन्तु लवकलार्द्धादि किमपि पर्याप्तम् । तदुक्तं नारदीये । लववेधेऽपि विप्रेन्द्र दशम्यैकादशीं सजेत् । सुराया बिन्दुना स्पृष्टं गङ्गाम्भ इव निर्मलमिति ॥ स्कन्दपुराणेऽपि । कलाकाष्ठादिगत्यैव दृश्यते दशमी विभो । एकादश्यां न कर्त्तव्यं व्रतं राजन् कदाचनेति । स्मृत्यन्तरेऽपि, कलार्द्धेनाऽपि विद्धा स्यादृशम्यैकादशी यदि । तदाऽप्येकादशीं हित्वा द्वादशीं समुपोषयेदिति ॥ सोऽयं कला काष्ठादिवेधोऽरुणोदये सूर्योदये च समानः ॥ तत्रारुणोदयवेधो वैष्णवविषयः । तच्च गारुडपुराणे विस्पष्टमवगम्यते । दशमीशेषसंयुक्तो यदि स्यादरुणोदयः । नैवोपोष्यं वैष्णवेन तद्दिनैकादशीव्रतमिति ॥ वैखानसपञ्चरात्रादिवैष्णवाऽऽगमोक्तदीक्षां प्राप्तो वैष्णवः । अत एव स्कन्दपुराणे वैष्णवस्वरूपमभिहितम्, परामापदमापन्नो हर्षे वा समुपस्थिते । नैकादशीं त्यजेद्यस्तु यस्य दीक्षाऽस्ति वैष्णवी ॥ समात्मा सर्वजीवेषु निजाचारादविप्लुतः । विष्ण्वर्पिताखिलाचारः स हि वैष्णव उच्यत इति ॥ विष्णुपुराणेऽपि, न चलति निजवर्णधर्मतो यः सममतिरात्मसुहृद्विपक्षपक्षे । न हरति न च हन्ति कश्चिदुच्चैः सितमनसं तमवेहि विष्णुभक्तमिति ॥ यथोक्तगुणसम्पन्नो वैष्णवदीक्षां प्राप्तो यस्तं प्रति तिथिरेवं निर्णेतव्या । एकादशी द्विधा, अरुणोदयवेधवती, शुद्धा चेति । तत्र वेधवती सर्वथा त्याज्या । तद्धि नैकादशीव्रतमिति गारुडपुराणे सामान्येन प्रतिषेधात् । विशेषस्तु सम्पृक्तादिभेदेन प्रतिषेधो द्रष्टव्यः । य एते वेधातिवेधमहावेधयोगाख्या दोषाः पूर्वमुक्तास्तेषु सत्स्वेकादशी सम्पृक्तसन्दिग्धसंयुक्तसङ्कीर्णनामभिर्व्यवह्रियते । अरुणोदयस्य प्रथमघटिकायां दशमीसद्भावो वेध इत्युक्तः । स च द्विविधः । घटिकाप्रारम्भे कृत्स्नघटिकायां च दशमीवृत्तिभेदात् । तत्र प्रारम्भमात्रे

दशमी युक्तैकादशी सम्पृक्तेत्युच्यते। कृत्स्नघटिकावृत्तिदशमीयुक्तैकादशी सन्दिग्धा। अरुणोदयप्रथममुहूर्त्तदशमीव्याप्तिरतिवेधः। तदुपेतैकादशी संयुक्तेत्युच्यते। सूर्यमण्डलदर्शनसन्देहवेलायां दशमीसद्भावो महावेधः।तद्युक्तैकादशी सङ्कीर्णेत्युच्यते। ता एताः सम्पृक्तादयश्चतस्रोऽपि त्याज्याः। तथाच गोभिलः। अरुणोदयवेलायां दशमी यदि सङ्गता। सम्पृक्तैकादशीं तां तु मोहिन्यै दत्तवान् प्रभुरिति॥ गारुडपुराणे, उदयात् प्राक् त्रिघटिकाव्यापिन्येकादशी यदा। सन्दिग्धैकादशी नाम वर्ज्येयं धर्मकाङ्क्षिभिः। उदयात् प्राग् मुहूर्त्तेन व्यापिन्येकादशी यदा। संयुक्तैकादशी नाम वर्जयेद्धर्मवृद्धये॥ आदित्योदयवेलायाम् आरभ्य षाष्टिनाडिका। सङ्कीर्णैकादशी नाम त्याज्या धर्मफलेप्सुभिः॥ पुत्रपौत्रप्रवृद्धयर्थं द्वादश्यामुपवासयेत्। तत्र क्रतुशतं पुण्यं त्रयोदश्यां तु पारणमिति॥ यद्यपि पूर्वत्र वेधवाक्ये सार्द्धं तु घटिकात्रयमित्युक्तम्। अत्र तु सन्दिग्धैकादशीवाक्ये त्रिघटिकेत्युक्तम्। तथापि नैतावता वैषम्येण विरोधः शङ्कनीयः। शास्त्रद्वयस्यापि दशमीवेधत्यागपरत्वात्। तदेवं सामान्यविशेषाभ्यां प्रतिषिद्धत्वादरुणोदयविद्धैकादशी वैष्णवेन परित्याज्या। यस्तु योगसंज्ञकश्चतुर्थो वेधस्तस्य त्याज्यत्वमर्थात् सिद्धम्।अरुणोदयवेधोऽपि यदा त्यज्यते तदा किमु वक्तव्यं सूर्योदयवेध इति। वचनं तत्र कण्वप्रोक्तं पूर्वमेवोदाहृतम्। या तु चतुर्विधवेधरहिता शुद्धैकादशी सा द्विविधा। आधिक्येन युक्ता तद्रहिता। आधिक्यं च त्रिविधम्।एकादश्याधिक्यम्। द्वादश्याधिक्यम्, उभयाधिक्यं चेति। त्रिष्वप्येतेषु पक्षेष्वरुणोदय मारभ्य प्रवृत्तां शुद्धामप्येकादशीं परित्यज्य परेद्युरुपवासः कर्त्तव्यः। तत्रैकादश्याधिक्ये नारद आह। सम्पूर्णैकादशी यत्र द्वादश्यां वृद्धिगामिनी। द्वादश्यां लङ्घनं कार्यं त्रयोदश्यां तु

पारणमिति ॥ स्मृत्यन्तरेऽपि, एकादशी यदा पूर्णा परतः पुनरेव सा । पुण्यं क्रतुशतस्योक्तं त्रयोदश्यां तु पारणमिति ॥ विष्णुरहस्येऽपि । एकादशीकलाप्राप्ता येन द्वादश्युपोषिता । तुल्यं क्रतुशतस्योक्तं त्रयोदश्यां तु पारणमिति ॥ द्वादश्याधिक्ये व्यास आह । एकादशी यदा लुप्ता परतो द्वादशी भवेत् । उपोष्या द्वादशी तत्र यदीच्छेत् परमां गतिमिति ॥ उभयाधिक्ये भृगुराह। सम्पूर्णैकादशी यत्र प्रभाते पुनरेव सा । तत्रोपोष्या द्वितीया तु परतो द्वादशी यदि ॥ नारदोऽपि, सम्पूर्णैकादशी यत्र प्रभाते पुनरेव सा । सर्वैरेवोत्तरा कार्या परतो द्वादशी यदीति ॥ स्मृत्यन्तरेऽपि, एकादशी भवेत् पूर्णा परतो द्वादशी यदि । एकादशीं परित्यज्य द्वादशीं समुपोषयेदिति ॥ उभयाधिक्यरहितायां तु शुद्धायां, न कोऽपि सन्देहोऽस्ति ॥ इति वैष्णवदीक्षायुक्तानामेकादशी निर्णीता ॥

अथ श्रौतस्मार्त्तपर्यवसितानां पञ्चरात्रादिदीक्षारहितानामेकादशी निर्णीयते ॥ अरुणोदयवेधस्य वैष्णवविषयत्वे व्यवस्थिते सत्युदये वेधः स्मार्त्तानुष्ठायिविषयत्वेन परिशिष्यते ॥ अत एव स्मर्यते । अतिवेधा महावेधा ये वेधातिथिषु स्मृताः । सर्वेऽप्यवेधा विज्ञेया वेधः सूर्योदये मत इति ॥ एवञ्च सूर्योदयवेधमपेक्ष्य एकादशी द्विधा भिद्यते, शुद्धा विद्धा चेति । तत्र शुद्धायां पूर्ववच्चत्वारो भेदा भवन्ति । एकादश्याधिक्यं, द्वादश्याधिक्यम् उभयाधिक्यमनुभयाधिक्यं चेति । एवं विद्धायामपि चत्वारो भेदा उन्नेयाः ॥ शुद्धायामेकादश्याधिक्ये द्वयोस्तिथ्योरुपवासयोग्यतामाह वृद्धवशिष्ठः । सम्पूर्णैकादशी यत्र प्रभाते पुनरेव सा । लुप्यते द्वादशी तस्मिन्नुपवासः कथं भवेत् ॥ उपोष्ये द्वे तिथी तत्र विष्णुप्रीणनतत्परैरिति ॥ उभयोरधिकारिभेदेन व्यवस्था

स्कन्दपुराणे दर्शिता। प्रथमेऽहनि सम्पूर्णा व्याप्याहोरात्रसंयुता। द्वादश्यां च तथा तात दृश्यते पुनरेव च ॥ पूर्वा कार्या गृहस्थैस्तु यतिभिश्चोत्तरा विभो इति ॥ एतच्च परेद्युर्द्वादश्यभावविषयम्।तथा च स्मृत्यन्तरे। पुनः प्रभातसमये घटिकैका यदा भवेत्। अत्रोपवासो विहितश्चतुर्थाश्रमवासिनाम्॥ विधवायाश्च तत्रैव परतो द्वादशी न चेदिति ॥ गारुडपुराणेऽपि । पुनः प्रभातसमये घटिकैका यदा भवेत् । अत्रोपवासो विहितो वनस्थस्य यतेस्तथा ॥ विधवायाश्च तत्रैव परतो द्वादशी न चेदिति ॥ पुराणान्तरेऽपि । एकादशी यदा पूर्णा परतः पुनरेव सा।पुण्यं क्रतुशतस्योक्तं त्रयोदश्यां तु पारणमिति । एकादश्याधिक्यपक्षे गृहियत्योर्व्यवस्था अभिहिता। द्वादश्याधिक्ये पूर्वेद्युरुपवासमाह नारदः। नचेदेकादशी विष्णौ द्वादशी परतः स्थिता। उपोष्यैकादशी तत्र यदीच्छेत् परमं पदमिति ॥ स्कान्देऽपि । शुद्धा यदा समा हीना समक्षीणाधिकोत्तरा । एकादश्यामुपवसेन्न शुद्धां वैष्णवीमपीति ॥ दशमीवेधरहिता शुद्धैकादशी परेद्युरुदयादूर्ध्वं नास्ति, किं तूदये समाप्ता ततो न्यूना वा । द्वयोरपि पक्षयोर्द्वादशी परेद्युरुदये समा न्यूनाऽधिका वा भवति । तत्र सर्वत्र शुद्धैकादशी उपोष्या, न तद्विद्धां वैष्णवीं द्वादशीमुपवसेदित्यर्थः। एवञ्च सति, प्रकृते द्वादश्याधिक्येऽपि एकादशी समन्यूनयोरन्यतरत्वात् प्रथमैवोपोष्येत्युक्तं भवति । उभयाधिक्ये परेद्युरुपवासो गारुडपुराणे दर्शितः । संपूर्णैकादशी यत्र प्रभाते पुनरेव सा। तत्रोपोष्या परा पुण्या परतो द्वादशी यदीति ॥ वाराहपुराणेऽपि । एकादशी विष्णुना चेद् द्वादशी परतः स्थिता।उपोष्या द्वादशी तत्र यदीच्छेत् परमं पदमिति । स्मृत्यन्तरेऽपि । संपूर्णैकादशी यत्र प्रभाते पुनरेव सा। वैष्णवी च त्रयोदश्यां घटिकैकाऽपि दृश्यते ॥ गृहस्थो-

ऽपि परां कुर्यात् पूर्वां नोपवसेत्तदा । पूर्णाप्येकादशी साज्या वर्द्धते द्वितयं यदीति ॥ एवमेकैक्याधिक्ये द्वितीयाधिक्येऽपि निर्णयो दर्शितः । अनुभयाधिक्ये तु नास्ति सन्देहः । इति शुद्धायां चत्वारो भेदा व्यवस्थिताः।अथ विद्धायां चत्वारो भेदा व्यवस्थाप्यन्ते तत्राप्येकादश्याधिक्ये पूर्ववद् गृहियत्योर्व्यवस्था द्रष्टव्या।तदाह प्रचेताः । एकादशी विवृद्धा चेच्छुक्लकृष्णे विशेषतः । उत्तरां तु यतिः कुर्यात् पूर्वामुपवसेद् गृहीति । नचैतद्वाक्यं शुद्धाधिक्ये चरितार्थमिति शङ्कनीयम् । बाधकाभावेन विद्धाधिक्येऽपि तद्वचनप्रवृत्तेर्निवारयितुमशक्यत्वात् । द्वादश्याधिक्ये परेद्युरुपवासः । तदाह व्यासः । एकादशी यदा लुप्ता परतो द्वादशी भवेत् । उपोष्या द्वादशी तत्र यदीच्छेत् परमां गतिमिति ॥ लुप्ता आदौ दशमीमिश्रत्वात् परतो वृद्ध्यभावाच्च क्षयं गतेति यावत् ॥ उभयाऽऽधिक्येऽपि परेद्युरुपवासः । तदुक्तं भविष्यत्पुराणे । एकादशीं दिशायुक्तां वर्द्धमाने विवर्जयेत् । क्षयमार्गस्थिते सोमे कुर्वीत दशमीयुतामिति ॥ उभयानाधिक्ये तु नैवास्ति सन्देहः । कोऽप्यन्तराऽभावात्।नच विद्धत्वादस्ति सन्देह इति वाच्यम् । असति कोऽप्यन्तरे विद्धाया अप्युपादेयत्वात् । तथाच विष्णुरहस्यम् । एकादशी भवेत् काचिद्दशम्या दूषिता तिथिः । वृद्धिपक्षे भवेद्दोषः क्षयपक्षे तु पुण्यद इति । इति विद्धाभेदा व्यवस्थापिताः ॥

अत्र शुद्धाविद्धयोरुभयोरप्येष निर्णयसङ्ग्रहः । एकादशीद्वादश्योरुभयोरपि वृद्धौ परेद्युरुपवासः । द्वयोरप्यवृद्धौ पूर्वेद्युः । एकादशीमात्रवृद्धौ गृहियत्योर्व्यवस्था । द्वादशीमात्रवृद्धौ शुद्धायां सर्वेषां पूर्वेद्युर्विद्धायां परेद्युरिति । तदेवं शास्त्रार्थव्यवस्थिते यानि यावन्ति मुनिवाक्यानि विधायकानि निषेधकानि वा तानि सर्वाणि यथोक्तनिर्णयाविरोधेन व्यवस्थापनीयानि । तत्र व्यव-

स्थापनप्रकारं दर्शयामः । स्कान्दे, प्रतिपत्प्रभृतयः सर्वा उदयादोदयाद्रवेः । सम्पूर्णा इति विख्याता हरिवासरवर्जिता इति ॥ हरिवासरे तु सम्पूर्णत्वं प्रकारान्तरेणोक्तम् । गारुडे, उदयात् प्राग् यदा विप्र मुहूर्त्तद्वयसंयुता । सम्पूर्णैकादशी ज्ञेया तत्रैवोपवसेद् गृहीति ॥ भविष्यत्पुराणेऽपि । आदित्योदयवेलायां प्राङ्मुहूर्त्तद्वयान्विता । एकादशी तु सम्पूर्णा विद्धाऽन्या परिकल्पितेति ॥ तदेतद्वचनद्वयमरुणोदयवेधोपजीवनेन प्रवृत्तत्वाद्वैष्णवविषयम् । दशमीवेधनिन्दकानि तु वचनानि द्विविधान्युपलभ्यन्ते । कानिचिदरुणोदयानुवादेन प्रवृत्तानि, कानिचित्तदननुवादेनेति । तथा भविष्ये, अरुणोदयकाले च दशमी यदि दृश्यते । तत्र नैकादशी कार्या धर्मकार्यार्थिनाशनीति ॥ कौत्सः,अरुणोदयवेलायां विद्धा काचिदुपोषिता । तस्याः पुत्रशतं नष्टं तस्मात्तां परिवर्जयेत् । एतादृशानि सर्वाणि वैष्णवविषयाणि द्रष्टव्यानि । अरुणोदयानुवादमन्तरेण दशमीविद्धानिन्दकानि वचनान्युपलभ्यन्ते । तद्यथा । नारदः । दशम्यनुगता यत्र तिथिरेकादशी भवेत् । तत्रापत्यविनाशश्च परेत्य नरकं व्रजेदिति ॥ ब्रह्मवैवर्त्तेऽपि । दशमीशेषसंयुक्तां यः करोति विमूढधीः । एकादशीफलं तस्य न स्याद् द्वादशवार्षिकमिति ॥ विष्णुरहस्ये, दशमीशेषसंयुक्तामुपोष्यैकादशीं किल । संवत्सरकृतेनेह नरो धर्मेण मुच्यत इति ॥ ईदृशानि सर्वाणि अरुणोदयवेधद्वयसामान्येन प्रवृत्तत्वाद्वैष्णवस्मार्त्तोभयविषयाणि । तत्र वैष्णवविषये निरङ्कुशं प्रवर्त्तन्ते । स्मार्त्तविषये तूभयाधिक्ये द्वादश्याधिक्ये च सर्वपुरुषविषयाणि द्रष्टव्यानि । दशमीविद्धाऽभ्यनुज्ञापकानि कानिचिद्वचनान्युपलभ्यन्ते । तद्यथा स्कन्दपुराणेऽपि । त्रयोदश्यां न लभ्येत द्वादशी यदि किञ्चन । उपोष्यैकादशी तत्र दशमीमिश्रिताऽपि चेति । स्मृत्यन्तरेऽपि । उपोष्यैका-

दशी तत्र द्वादशी न भवेद्यदि । दशम्या हि विमिश्रैव एकादश्येव धर्मकृदिति । बृहद्वसिष्ठः । द्वादशी स्वल्पमल्पाऽपि यदि न स्यात् परेऽहनि । दशमीमिश्रिता कार्या महापातकनाशिनीति ॥ ऋष्यशृङ्गः । एकादशी न लभ्येत द्वादशी सकला भवेत् । उपोष्यैकादशी विद्धा ऋषिरुद्दालकोऽब्रवीदिति ॥ हारीतोऽपि, त्रयोदश्यां यदा नष्टा द्वादशी घटिकाद्वयम् । दशम्येकादशी विद्धा सैवोपोष्या सदा तिथिरिति । एतादृशानि वाक्यानि सर्वाण्यनुभयाधिक्ये सर्वविषयाण्येकादश्याधिक्ये तु स्मार्तगृहस्थमात्रविषयाणि द्रष्टव्यानि, न त्वेतानि वैष्णवविषयाणि । वैष्णवप्रकरणेषु विद्धाभ्यऽनुज्ञाया अदर्शनात् । संपूर्णैकादशीपरित्यागविषयाणि कानिचिद्वचनान्युपलभ्यन्ते । तद्यथा स्कन्दपुराणे, एकादशी भवेत् पूर्णा परतो द्वादशी यदि । तदा ह्येकादशीं त्यक्त्वा द्वादशीं समुपोषयेदिति ॥ तथाच कालिकापुराणे । एकादशी यदा पूर्णा परतो द्वादशी भवेत् । उपोष्या द्वादशी तत्र तिथिवृद्धिः प्रशस्यत इति ॥ गारुडपुराणे पूर्णा भवेद्यदा नन्दा भद्रा चैव विवर्द्धते । तदोपोष्या तु भद्रा स्यात् तिथिवृद्धिः प्रशस्यत इति ॥ तादृशानि सर्वाणि वैष्णवविषयाणि । दिनत्रयविषयकाणि कानिचिद्वचनान्युपलभ्यन्ते । नारदः, यदि दैवात्तु संसिध्येदेकादश्यां दिनत्रयम् । तत्र क्रतुशतं पुण्यं द्वादशीपारणं भवेदिति ॥ कूर्मपुराणेऽपि । द्विस्पृगेकादशी यत्र तत्र सन्निहितो हरिः । तामेवोपवसेत् काममकामो विष्णुतत्पर इति॥अत्राद्यन्तयोर्दशमीद्वादश्योर्मध्ये एकादशीसेतद्दिनत्रये यदाप्नोति तदा परतो द्वादशीवृद्धिरवृद्धिश्चेत्युभयं सम्भवति॥तत्र यद्यवृद्धिस्तदा यथोक्तं दिनत्रयमुपोष्यम् । तदुक्तं स्कन्दपुराणे, दिनत्रयम् क्रने देवि नोपोष्या दशमीयुता* सैवोपोष्या सदा पुण्या परतश्चेत्त्रयोदशीति ॥ द्वादशीवृद्धौ, एकादशी यदा लुप्तेसनेन

व्यासवचनेन परेद्युरुपवास इति पूर्वमेव निर्णीतम् । यदा त्वाद्यन्तयोरेकादशीत्रयोदश्योर्मध्ये द्वादशीत्येतादृशं दिनत्रयं तदा नारदेन स्मर्यते । एकादशी द्वादशी च रात्रिशेषे त्रयोदशी । त्रिस्पृशा नाम सा प्रोक्ता ब्रह्महत्यां व्यपोहतीति ॥ तदेतद्वैष्णवविषयं, यतिविषयं वा द्रष्टव्यम् । गृहस्थे तु तन्निषिद्धम् । तथाच कूर्मपुराणे । एकादशी द्वादशी च रात्रिशेषे त्रयोदशी । उपवासं न कुर्वीत पुत्रपौत्रसमन्वित इति ॥ पद्मपुराणेऽपि एकादशी द्वादशी च रात्रिशेषे त्रयोदशी । त्र्यहस्पृग् यदहोरात्रं नोपोष्यं तत्सुतार्थिभिरिति ॥ यत्तु ऋष्यश्रृङ्गेणोक्तम् । अविद्धानि निषिद्धैश्च न लभ्यन्ते दिनानि तु । मुहूर्त्तैः पञ्चभिर्विद्धा ग्राह्यैवैकादशी तिथिः ॥ तदर्द्धविद्धान्यन्यानि दिनान्युपवसेद् बुधः । पूर्वविद्धा न कर्त्तव्या षष्ठ्येकादश्यथाष्टमी ॥ एकादशीं तु कुर्वीत क्षीयते द्वादशी यदीति ॥ अत्र निषेधो यतिविषयः । विधिर्गृहस्थविषयः । वेधबाहुल्येन हेयत्वशङ्का मा भूदिति पञ्चभिर्मुहूर्त्तैरित्युक्तम् । तदेवं नानाविधवचनव्यवस्थापनप्रकारो व्युत्पादितः । अनया व्युत्पत्त्या मन्दबुद्धिरपि व्यवस्थापयितुं शक्नोत्येव । इत्युपवासतिथिर्निरूपिता ॥

अथाधिकारी निरूप्यते । तत्र नारदः । अष्टाब्दादधिको मर्त्यो ह्यपूर्णाऽशीतिहायनः । भुङ्क्ते यो मानवो मोहादेकादश्यां स पापकृदिति ॥ कात्यायनोऽपि । अष्टवर्षाधिको मर्त्यो ह्यशीतिन्यूनवत्सरः । एकादश्यामुपवसेत् पक्षयोरुभयोरपीति ॥ गृहस्थस्य तु शुक्लैकादश्यामेव नित्योपवासः । तथाच कूर्मपुराणे । एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि । वानप्रस्थो यतिश्चैव शुक्लामेव सदा गृहीति । भविष्योत्तरेऽपि । एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि । ब्रह्मचारी च नारी च शुक्लामेव सदा गृही ॥ नारी विधवा ।

तस्या एव यतिधर्मत्वात् । पतिमत्यास्तु उपवासं निषेधति । विष्णुः, पत्यौ जीवति या नारी उपोष्य व्रतमाचरेत् । आयुष्यं हरते भर्त्तुर्नरकं चैव गच्छतीति ॥ मनुः । नास्ति स्त्रीणां पृथग्यज्ञो न व्रतं नाप्युपोषणमिति ॥ मार्कण्डेयः । नारी खल्वननुज्ञाता भर्त्रा पित्रा सुतेन वा । निष्फलं तु भवेत्तस्या यत् करोति व्रतादिकमिति ॥ आदिशब्दाद्वस्त्रालङ्कारगन्धधूपाञ्जनानामुपसङ्ग्रहः । तदाह मनुः । पुष्पालङ्कारवस्त्राणि गन्धधूपानुलेपनमिति ॥ पत्युरनुमत्या तु पत्नी व्रतादिष्वधिकारिणी भवति । तदाह कात्यायनः । भार्या पत्युर्मतेनैव व्रतादीनाचरेत् सदेति ॥ शुक्लामेवेत्येवकारः कृष्णैकादश्याम् उपवासनिषेधपरः । तथाच कूर्मपुराणे । संक्रान्त्यां कृष्णपक्षे च रविशुक्रदिने तथा । एकादश्यां न कुर्वीत उपवासं च पारणमिति । गौतमोऽपि । आदित्येऽहनि संक्रान्त्यामसितैकादशीषु च । व्यतीपाते कृते श्राद्धे पुत्री नोपवसेद् गृहीति ॥ अत्र पुत्रीति विशेषणं पुत्रवतो दोषविशेषप्रदर्शनार्थम् । तथाच पद्मपुराणे । संक्रान्त्यामुपवासेन पारणेन युधिष्ठिर । एकादश्यां च कृष्णायां ज्येष्ठः पुत्रो विनश्यति ॥ नारदीयेऽपि, इन्दुक्षयार्कसंक्रान्त्योरेकादश्यां सितेतरे ॥ उपवासं न कुर्वीत यदीच्छेत् सन्ततिं ध्रुवामिति ॥ अत्र संक्रान्त्यादिषूपवासस्य निषेधः संक्रान्त्यादिनिमित्तकस्य । तथाच कात्यायनः । एकादशीषु कृष्णासु रविसंक्रमणे तथा । चन्द्रसूर्योपरागे च न कुर्यात् पुत्रवान् गृही ॥ तत्प्रयुक्तोपवासस्य निषेधोऽयमुदाहृतः । प्रयुक्त्यन्तरयुक्तस्य न विधिर्न निषेधनमिति ॥ जैमिनिरपि । तन्निमित्तोपवासस्य निषेधोऽयमुदाहृतः । नानुषङ्गकृतो ग्राह्यो यतो नित्यमुपोषणमिति । अयमर्थः । एकादश्युपवासस्य नित्यत्वात् संक्रान्त्याद्युपवासस्य च काम्य-

त्त्राव् काम्योपवासनिषेधेन नित्योपवासनिषेधः सिद्ध्यतीति ॥ संक्रान्त्यादिनिमित्तकोपवासः संवर्त्तेनोक्तः । अमावास्या द्वादशी च संक्रान्तिश्च विशेषतः । एताः प्रशस्तास्तिथयो भानुवारस्तथैव च ॥ अत्र स्नानं जपो होमो देवतानां च पूजनम् । उपवासस्तथा दानमेकैकं पावनं स्मृतमिति ॥ गृहस्थस्य तु शुक्लायामेव नित्योपवास इत्युक्तम्।नैमित्तिककाम्योपवासौ तु कृष्णायामपि कर्त्तव्यौ । तत्र नैमित्तिकः स्मृत्यन्तरे पठ्यते ॥ शयनी बोधिनी मध्ये या कृष्णैकादशी भवेत् । सैवोपोष्या गृहस्थेन नाऽन्या कृष्णा कदाचनेति ॥ काम्यस्तु स्कन्दपुराणे । पितॄणां गतिमन्विच्छन् कृष्णायां समुपोषयेदिति ॥ सनत्कुमारः। भानुवारेण संयुक्ता कृष्णा संक्रान्तिसंयुता।एकादशी सदोपोष्या सर्वसंपत्करी तिथिरिति ॥ मत्स्यपुराणेऽपि । एकादश्यां तु कृष्णायामुपोष्य विधिवन्नरः । पुत्रान् आयुः समृद्धिं च सायुज्यं च स गच्छतीति ॥ दिनक्षये पुत्रवतो गृहस्थस्योपवासो निषिद्धः। तथाच पितामहः। एकादश्यां दिनक्षये उपवासं करोति यः। तस्य पुत्रा विनश्यन्ति मघायां पिण्डतो यथेति ॥ मत्स्यपुराणे । दिनक्षयेऽर्कसंक्रान्तौ ग्रहणे चन्द्रसूर्ययोः । उपवासं न कुर्वीत पुत्रपौत्रसमन्वित इति ॥ वसिष्ठोऽपि, एकस्मिन् सावने त्वह्नि तिथीनां त्रितयं यदा । तदा दिनक्षयः प्रोक्तस्तत्र साहस्रिकं फलमिति । फलमत्रोपवासव्यतिरिक्तदानादिजन्यं द्रष्टव्यम् । उपवासस्य निषिद्धत्वात् । ईदृशे विषये किं कर्त्तव्यमित्याकाङ्क्षायां वायुपुराणे पठ्यते । उपवासे निषिद्धे तु भक्ष्यं किञ्चित् प्रकल्पयेत् । न दुष्यत्युपवासेन उपवासफलं लभेत् ॥ नक्तं हविष्यान्नमनोदनं वा फलं तिलाः क्षीरमथाम्बुचाज्यम् । यत् पञ्चगव्यं यदि चापि वायुः प्रशस्तमत्रोत्तरमुत्तरं चेति ॥ उपवासासमर्थस्तु

एकभक्तादीनि कुर्यात् । तथाच स्मृतिः ॥ उपवासे त्वशक्ताना-मशीतेरूर्ध्वजीविनाम् । एकभक्तादिकं कार्यमाह बौधायनो मुनि-रिति ॥ मार्कंडेयपुराणे । एकभक्तेन नक्तेन तथैवायाचितेन च । उपवासेन दानेन न निर्द्वादशिको भवेदिति ॥ कूर्मपुराणेऽपि । एकभक्तेन नक्तेन क्षीणवृद्धातुरः क्षिपेत् । नातिक्रमेद् द्वादशीं तु उपवासव्रतेन चेति ॥ स्मृत्यन्तरेऽपि । एकभक्तेन नक्तेन बाल-वृद्धातुरः क्षिपेत् । पयो मूलं फलं वाऽपि न निर्द्वादशिको भवे-दिति ॥ भविष्यत्पुराणे । एकादश्यामुपवसेन्नक्तं वाऽपि समाच-रेदिति ॥ नित्यकाम्ययोरशक्तास्तु प्रतिनिधिभिर्व्रतं कारयेयुः । तथाच विष्णुरहस्ये । असामर्थ्ये शरीरस्य व्रते च समुपस्थिते । कारयेद्धर्मपत्नीं वा पुत्रं वा विनयान्वितमिति ॥ पैठीनसिः । भार्या पत्युर्व्रतं कुर्याद्भार्यायाश्च पतिर्व्रतम् । असामर्थ्ये परस्ताभ्यां व्रतभङ्गो न जायते इति ॥ स्कन्दपुराणे । पुत्रं वा विनयोपेतं भगिनीं भ्रातरं तथा । एषामभाव एवान्यं ब्राह्मणं विनियोजये-त् ॥ भ्रातरं भगिनीं शिष्यं कारयेद् ब्राह्मणादिभिरिति ॥ स्मृत्य-न्तरेऽपि । पितृमातृपतिभ्रातृश्वश्रूगुर्वादिभूभुजाम् । अदृष्टार्थमु-पोषित्वा स्वयं च फलभाग् भवेदिति ॥ कात्यायनः । पितृमातृ-स्वसृभ्रातृगुर्वर्थे च विशेषतः । उपवासं प्रकुर्वाणः पुण्यं शतगुणं लभेत् ॥ दक्षिणा नात्र दातव्या शुश्रूषाविहिता च सा । नारी च पतिमुद्दिश्य एकादश्यामुपोषिता ॥ पुण्यं शतगुणं प्राहुर्मुनयः पारदर्शिनः । उपवासफलं तस्याः पतिः प्राप्नोत्यसंशयम् ॥ राज्यस्थक्षत्रियार्थे च एकादश्यामुपोषितः । पुरोधाः क्षत्रियस्या-ऽर्द्धं फलं प्राप्नोति निश्चितम् ॥ पितामहादीनुद्दिश्य एकादश्यामु-पोषणे । कृते तु तत्फलं विप्राः समग्रं फलमाप्नुयुः ॥ कर्ता दशगुणं पुण्यं प्राप्नोत्यत्र न संशयः । यमुद्दिश्य कृतं सोऽपि स-

म्पूर्णं फलमाप्नुयादिति ॥ प्रतिनिधौ च कश्चिद्विशेषः स्मर्यते । काम्ये प्रतिनिधिर्नास्ति नित्ये नैमित्तिके च सः । काम्येऽप्युपक्रमादूर्ध्वं केचित् प्रतिनिधिं विदुरिति ॥ अयमर्थः । नित्यं नैमित्तिकं च प्रतिनिधिनाप्युपक्रम्य कारयेत् । काम्यं तु स्वसामर्थ्यं परीक्ष्य स्वयमेव उपक्रम्य कुर्यात् । असामर्थ्ये उपक्रमादूर्ध्वं प्रतिनिधिनाऽपि तत् कारयेत् । उपवासाकरणे प्रायश्चित्तं स्मर्यते । अष्टम्यां च चतुर्दश्यां दिवा भुक्त्वैन्दवं चरेत् । एकादश्यां दिवारात्रौ नक्तं चैव तु पर्वणीति ॥ स्मृत्यन्तरे । अर्के पर्वद्वये रात्रौ चतुर्दश्यष्टमीदिवा । एकादश्यामहोरात्रं भुक्त्वा चान्द्रायणं चरेत् ॥ अथ काम्योपवासक्रमः । तत्राङ्गिराः । सायमाद्यन्तयोरह्नोः सायं प्रातश्च मध्यमे । उपवासफलं प्रेप्सुर्जह्याद्भक्तचतुष्टयमिति ॥ देवलः, दशम्यामेकभक्तस्तु मांसमैथुनवर्जितः । एकादशीमुपवसेत् पक्षयोरुभयोरपि ॥ देवतास्तस्य तुष्यन्ति कामितं तस्य सिद्ध्यतीति । बृहस्पतिरपि, दिवा निद्रा परान्नं च पुनर्भोजनमैथुने । क्षौद्रं कांस्यामिषं तैलं द्वादश्यामष्ट वर्जयेदिति ॥ कूर्मपुराणे । कांस्यं मांसं मसूरान्नं चणकान् कोरदूषकान् । शाकं मधु परान्नं च त्यजेदुपवसँस्त्रियमिति ॥ स्मृत्यन्तरेऽपि । शाकं मांसं मसूरांश्च पुनर्भोजनमैथुने । द्यूतमत्यम्बुपानं च दशम्यां वैष्णवस्त्यजेत् ॥ विष्णुधर्मे । असम्भाष्यान् हि संभाष्य तुलस्यलसिकादलम् । आमलक्याः फलं वाऽपि पारणे प्राश्य शुद्ध्यति ॥ असकृज्जलपानं च दिवा स्वापं च मैथुनम् । ताम्बूलचर्वणं मांसं वर्जयेद् व्रतवासर इति ॥ वसिष्ठः । उपवासे तथा श्राद्धे न खादेद्दन्तधावनम् । दन्तानां काष्ठसंयोगो हन्ति सप्त कुलानि चेति ॥ दन्तधावने प्रायश्चित्तं विष्णुरहस्ये, श्राद्धोपवासदिवसे खादित्वा दन्तधावनम् । गायत्र्याः शतसंपूतमम्बु प्राश्य विशुद्ध्यतीति ॥ हारीतः— पतितपाखण्ड-

नास्तिकसंभाषणमनृताश्लीलादिकमुपवासादिषु वर्जयेदिति॥ कूर्मपुराणे। बहिर्ग्रामान्त्यजान् सूतिं पतितं च रजस्वलाम्। न स्पृशेन्नाऽभिभाषेत नेक्षेत व्रतवासर इति ॥ विष्णुरहस्ये । स्मृत्यालोकनगन्धादिस्वादनं परिकीर्त्तनम् । अन्नस्य वर्जयेत् सर्वं ग्रासानां चाऽभिकाङ्क्षणम् ॥ गात्राभ्यङ्गं शिरोऽभ्यङ्गं ताम्बूलं चानुलेपनम् । व्रतस्थो वर्ज्जयेत् सर्वं यच्चान्यत्र निराकृतमिति॥ ब्रह्माण्डपुराणेऽपि कांस्यं मांसं सुरा क्षौद्रं लोभं वितथभाषणम् । व्यायामं च प्रवासं च दिवा स्वप्नं तथाञ्जनम् ॥ तिलपिष्टं मसूरांश्च द्वादशैतानि वैष्णवः ॥ द्वादश्यां वर्ज्जयेन्नित्यं सर्वपापैः प्रमुच्यत इति ॥ एकादश्यां श्राद्धं कृत्वापि न भोक्तव्यम् । तदाह कात्यायनः । उपवासो यदा नित्यः श्राद्धं नैमित्तिकं भवेत् । उपवासं तदा कुर्यादाघ्राय पितृसेवितमिति ॥ यत्तु वचनं, श्राद्धं कृत्वा तु यो विप्रो न भुङ्क्ते पितृसेवितम्। हविर्देवा न गृह्णन्ति कव्यं च पितरस्तथेति ॥ तदेकादशीव्यतिरिक्तविषयम् । आघ्राणेनापि भोजनकार्यं सिद्ध्यति । तस्य भोजनकार्यविधानात् । अयमिह व्रतानुष्ठानक्रमः । प्रथमं दशम्यामेकभक्तं कृत्वानन्तरं दन्तधावनं कुर्यात् । तथाच स्मर्यते, दशम्यामेकभुग्भूत्वा खादयेद्दन्तधावनमिति । तदनन्तरं दशम्यां रात्रौ नियमग्रहणं कुर्यात् । तदुक्तं ब्रह्मवैवर्त्ते, प्राप्ते हरिदिने सम्यग्विधाय नियमं निशि । दशम्यामुपवासस्य प्रकुर्याद्वैष्णवं व्रतमिति ॥ नियमो नारदीये स्मर्यते । अक्षारलवणाः सर्वे हविष्यान्ननिषेविणः। अवनीतल्पशयनाः प्रियासङ्गविवर्जिता इति॥ ततः प्रातरुत्थायैकादश्यां बाह्याभ्यन्तरशुद्धिं विदध्यात् । तत्प्रकारस्तु— शरीरमन्तःकरणोपघातं वाचश्च विष्णुर्भगवानशेषम् * शमं नयत्वस्तु ममेह शर्म पापादनन्ते हृदि सन्निविष्टे॥ अन्तः शुद्धिं बहिः शुद्धिं शुद्धो धर्ममयोऽच्युतः । स करोतु ममैतस्मिन् शुचि-

देवाऽस्तु, सर्वदा ॥ वाह्योपघातानानघो बौद्धांश्च भगवानजः । शमं नयत्वनन्तात्मा विष्णुश्चेतसि संस्थितः ॥ अनन्तरं प्रातः सङ्कल्पं कुर्यात् । तदुक्तं वाराहपुराणे । गृहीत्वौदुम्बरं पात्रं वारिपूर्णमुदङ्मुखः । उपवासं तु गृह्णीयाद् यद्वा वार्येव धारयेदिति । औदुम्बरं ताम्रपात्रम् । सङ्कल्पमाह विष्णुः । एकादश्यां निराहारः स्थित्वाऽहमपरेऽहनि । भोक्ष्यामि पुण्डरीकाऽक्ष शरणं मे भवाऽच्युत ॥ इत्युच्चार्य ततो विद्वान् पुष्पाञ्जलिमथार्पयेदिति ॥ अनन्तरं तत्पात्रगतं जलं पिबेत् । तदाह कात्यायनः । अष्टाक्षरेण मन्त्रेण त्रिर्जप्तेनाभिमन्त्रितम् । उपवासफलं प्रेप्सुः पिबेत् पात्रगतं जलमिति ॥ विद्धैकादश्युपवासे रात्रौ संकल्पः । तथाच नारदीये विद्धोपवासे सकलं दिनं त्यक्त्वा समाहितः । रात्रौ संपूजयेद्विष्णुं संकल्पं च तदाचरेदिति ॥ मध्यरात्रादुपरि दशमीयुक्ता चेदेकादशी तस्यां मध्याह्नस्योपरि संकल्पः । तथाच स्मृतिः । दशम्याः सङ्गदोषेण मध्यरात्रात् परेण तु । वर्जयेच्चतुरो यामान् संकल्पाऽर्चनयोः सदेति ॥ एकादश्यां देवस्योपरि पुष्पमण्डपं कारयेत् । तदुक्तं ब्रह्मपुराणे । एकादश्यां शुभे पक्षे निराहारः समाहितः । नानापुष्पैर्मुनिश्रेष्ठ विचित्रं पुष्पमण्डपम् ॥ कृत्वा चावरणं पश्चात् जागरं कारयेन्निशीति ॥ तस्मिन् मण्डपे देवमर्चयेत् । तदुक्तं ब्रह्मपुराणे । एकादश्यां शुभे पक्षे निराहारः समाहितः । पुष्पैर्गन्धैस्तथा धूपैर्दीपैर्नैवेद्यकैः परैः ॥ उपचारैर्बहुविधैर्जपहोमैः प्रदक्षिणैः । स्तोत्रैर्नानाविधैर्दिव्यैर्गीतवाद्यैर्मनोहरैः ॥ दण्डवत्प्रणिपातैश्च जयशब्दैस्तथोत्तमैः ॥ एवं संपूज्य विधिवद्रात्रौ कृत्वा प्रजागरम् । याति विष्णोः परं स्थानं नरो नास्त्यत्र संशयः ॥ द्वादश्यां कर्त्तव्यमाह कात्यायनः । प्रातः स्नात्वा हरिं पूज्य उपवासं समर्पयेत् । अज्ञानतिमिरान्धस्य व्रतेनानेन केशव ॥ प्रसादसुमुखो नाथ ज्ञानदृष्टिप्रदो

भत्र । मन्त्रं जपित्वा हरये निवेद्योपोषणं व्रती ॥ द्वादश्यां पारणं कुर्याद् वर्जयित्वा ह्युपोदकीमिति ॥ सूतकादौ दानार्चनरहित उपवासमात्रं कुर्यात् ।

तदुक्तं कूर्मपुराणे । काम्योपवासे प्रक्रान्ते त्वन्तरामृतसूतके । तत्र काम्यव्रतं कुर्याद्दानार्चनविवर्जितमिति ॥ वाराहपुराणे । सूतके च नरः स्नात्वा प्रणम्य मनसा हरिम् ॥ एकादश्यां न भुञ्जीत व्रतमेवं न लुप्यते ॥ मृतकेऽपि न भुञ्जीत एकादश्यां सदा नरः । द्वादश्यां तु समश्नीयात् स्नात्वा विष्णुं प्रणम्य चेति ॥ तत्र परिसक्तं देवार्चनं सूतकान्ते कुर्यात् । तदुक्तं मत्स्यपुराणे । सूतकान्ते नरः स्नात्वा पूजयित्वा जनार्दनम् । दानं दत्वा विधानेन व्रतस्य फलमश्नुत इति ॥ स्त्रीणां रजोदर्शनेऽपि न व्रतत्यागः, किं तु देवार्चनादिरहितं सूतकादाविवोपवासमात्रं कार्यम् । तदाह पौलस्त्यः । एकादश्यां न भुञ्जीत नारी दृष्टे रजस्यपि ॥ ऋष्यशृङ्गोऽपि । सम्प्रवृत्तेऽपि रजसि न त्याज्यं द्वादशीव्रतमिति ॥ सत्यव्रतोऽपि । प्रारब्धदीर्घतपसां नारीणां यद्रजो भवेत् । न तत्रापि व्रतस्य स्यादुपरोधः कदाचनेति ॥ शुद्ध्यनन्तरं देवतार्चनादिकं कुर्यात् । तथाच स्मृतिः । स्नात्वा भर्त्तुश्चतुर्थेऽह्नि शुद्धा स्यात् परिचारणे । पञ्चमेऽहनि शुद्धा स्याद्दैवे पित्र्ये च कर्मणीति॥ नित्योपवासो विष्णुरहस्येऽभिहितः । अथ नित्योपवासी चेत् सायं प्रातर्भुजिक्रियाम् । वर्जयेन्मतिमान् विप्रः सम्प्राप्ते हरिवासर इति ॥ ब्रह्मवैवर्तेऽपि । इति विज्ञाय कुर्वीतावश्यमेकादशीव्रतम् । विशेषनियमासक्तोऽहोरात्रं भुक्तिवर्जितः ॥ निगृहीतेन्द्रियश्रद्धासहायो विष्णुतत्परः । उपोष्यैकादशीं पापान्मुच्यते नात्र संशयः ॥ शक्तौ सत्यां नियमानाचरेत् । तथाच कात्यायनः । शक्तिमांस्तु पुनः कुर्यान्नियमं सविशेषणमिति ॥ यदा द्वादश्यां

श्रवणनक्षत्रं भवेत्तदा शुद्धैकादशीमपि परित्यज्य द्वादश्यामेवोपवसेत्। तथाच नारदीये। शुक्ला वा यदि वा कृष्णा द्वादशी श्रवणान्विता। तयोरेवोपवासश्च त्रयोदश्यां तु पारणमिति॥ तथा, एकादश्यां त्वविद्धायां सम्प्राप्ते श्रवणे तदा। उपोष्या द्वादशी शुद्धा सर्वपापक्षयावहेति॥ यदा त्रयोदश्यां द्वादश्याः कलाद्वयं चाप्युदये सम्भवति तदा द्वादशीकाल एव पारणं कार्यम्। तदुक्तं नारदीये। भवेद्यत्र त्रयोदश्यां द्वादश्याश्च कलाद्वयम्। द्वादश द्वादशीं हन्ति त्रयोदश्यां तु पारणम्॥ कलाद्वयं त्रयं वाऽपि द्वादशीं न त्वतिक्रमेत्॥ पारणे मरणे नृणां तिथिस्तात्कालिकी स्मृतेति॥ ननु द्वादश्यातिक्रमेऽपि नास्ति दोषः। सा तिथिः सकला ज्ञेयेति वचनेन साकल्याभिधानादितिचेन्मैवम्। साकल्यस्य स्नानादिविषयत्वात्। वाक्यशेषे स्नानदानजपादिष्वित्यभिधानात्। पारणेति न साकल्यवचनं प्रवर्त्तते। तिथिस्तात्कालिकी स्मृतेति वचनात्। द्वादशीकाले यदा पारणं तदा ततः प्रागेव सर्वाः क्रियाः कर्त्तव्याः। तदुक्तं नारदीये। अल्पायामथ विप्रेन्द्र द्वादश्यामरुणोदये। स्नानार्चनक्रियाः कार्या दानहोमादिसंयुताः॥ एतस्मात् कारणाद्विप्रः प्रत्यूषे स्नानमाचरेत्। पितृतर्पणसंयुक्तं स्वल्पां दृष्ट्वा च द्वादशीम्॥ महाहानिकरा ह्येषा द्वादशी लङ्घिता नृणाम्। करोति धर्महरणमस्नातेव सरस्वतीति॥ गारुडपुराणेऽपि। यदा स्वल्पा द्वादशी स्यादपकर्षो भुजेर्भवेत्। प्रातर्माध्याह्निकस्यापि तत्र स्यादपकर्षणमिति॥ स्कन्दपुराणेऽपि। यदा भवेदतीवाल्पा द्वादशी पारणादिने। उषः काले द्वयं कुर्यात् प्रातर्माध्याह्निकं तदेति॥ तत्र पारणासम्भवे अद्भिः पारणं कुर्यात्। तदाह कात्यायनः। सन्ध्यादिकं भवेन्नित्यं पारणं तु निमित्ततः। अद्भिस्तु पारयित्वाथ नैमित्तिके भुजिर्भवेदिति॥

देवलोऽपि । सङ्कटे विषमे प्राप्ते द्वादश्यां पारयेत् कथम् । अद्भि-स्तु पारणं कुर्यात् पुनर्भुक्तन्न दोषकृदिति ॥ यदा कलयापि द्वादशी नास्ति तदा त्रयोदश्यामपि पारणं कुर्यात् । तदुक्तं नारदीये । त्रयोदश्यां तु शुद्धायां पारणं पृथिवीफलम् । शतयज्ञादिकं वाऽपि नरः प्राप्नोत्यसंशयमिति ॥ पारणं च नैवेद्यतुलसीमिश्रितं कुर्यात् । तदुक्तं स्कन्दपुराणे । कृत्वा चैवोपवासं तु योऽश्नाति द्वादशीदिने । नैवेद्यं तुलसीमिश्रं हत्याकोटिविनाशनमिति ॥

अथैकादशीमहिमा । तत्र वसिष्ठः । एकादशीसमुत्थेन वह्निना पातकेन्धनम् । भस्मतां याति राजेन्द्र अपि जन्मशतोद्भवम् ॥ नेदृशं पावनं किञ्चिन्नराणां भुवि विद्यते । यादृशं पद्मनाभस्य दिनं पातकहानिदम् ॥ तावत् पापानि देहेऽस्मिंस्तिष्ठन्ति मनुजाऽधिप । यावन्नोपवसेज्जन्तुः पद्मनाभदिनं शुभम् ॥ अश्वमेधसहस्राणि वाजपेयशतानि च । एकादश्युपवासस्य कलां नार्हन्ति षोडशीम् ॥ एकादशेन्द्रियैः पापं यत् कृतं भवति प्रभो । एकादश्युपवासेन तत्सर्वं विलयं व्रजेत् ॥ एकादशीसमं किञ्चित् पापत्राणं न विद्यते । स्वर्गमोक्षप्रदा ह्येषा राज्यपुत्रप्रदायिनी ॥ सुकलत्रप्रदा ह्येषा शरीरारोग्यदायिनी । न गङ्गा न गया भूप न काशी न च पुष्करम् ॥ न चाऽपि कौरवं क्षेत्रं न रेवा न च देविका । यमुना चन्द्रभागा च तुल्या भूप हरेर्दिनात् ॥ अनायासेन राजेन्द्र प्राप्यते वैष्णवं पदम् ॥ चिन्तामणिसमा ह्येषा ह्यथवाऽपि निधेः समा ॥ साङ्कल्पपादपप्रख्या देवदेवोपमा तथेति ॥ अस्यामेकादश्यां यान्युपवासप्रतिनिधिरूपाणि एकभक्तनक्तायाचितादीनि तेषां प्रतिपदुक्तन्यायेनोपवासतिथावनुष्ठानम् । यानि तु स्वतन्त्राण्येकभक्तनक्तादीनि तेषां पूर्वोक्तन्यायेन मध्यान्हादिव्यापितिथिग्रहणप्राप्तौ दशमीविद्धा प्रतिषिद्ध्यते द्वादशीकल्पे । पूर्णाविद्धां

दिनार्द्धेन नन्दां पूर्णामपि त्यजेत्। यदीच्छेदात्मसन्तानं नियमेषु चतुर्ष्वपि ॥ नोपोषितं च नक्तं च नैकभक्तमयाचितम्। नन्दायां पूर्णविद्धायां कुर्यादैश्वर्यमोहितः ॥ एकादशीयुता शस्ता द्वादश्या समुपोषणे। नक्तं चायाचिते नित्यमेकभक्ते तथाऽनघ ॥ नक्तं वाऽयाचितं तात नैकभक्तमथाहरेत्। दशमीसहितं दानमनर्थं हरिवासर इति ॥ दिनार्द्धेन सार्द्धसप्तमुहूर्त्तैरित्यर्थः। एतदेवाभिप्रेत्य दिक् पञ्चदशाभिस्तथेत्युदाहृतम्। तथा सार्द्धसप्तमुहूर्त्तैस्तु वेधोऽयं बाधते व्रतमिति च ॥ इतो न्यूनवेधे तु तिथ्यन्तरवन्मध्याह्नादिव्याप्तिर्ग्रहीतव्या ॥ इत्येकादशीनिर्णयः ॥

अथ द्वादशी निर्णीयते ॥ सा च युग्मादिशास्त्रेण पूर्वविद्धा ग्राह्या। स्कन्दपुराणेऽपि। द्वादशी च प्रकर्त्तव्या एकादश्या युता विभो। सदा कार्या च विद्वद्भिर्विष्णुभक्तैश्च मानवैरिति ॥ उत्तरविद्धां प्रतिषेधति बृहद्वसिष्ठः। द्वितीया पञ्चमी वेधाद्दशमी च त्रयोदशी। चतुर्दशी चोपवासे हन्युः पूर्वोत्तरे तिथी इति ॥ नन्वेवं सत्येकादश्युपवासो द्वादश्युपवासश्चेत्युभयमेकस्मिन् दिने प्राप्नोति। सत्यम्। तथापि चोभयस्यान्योन्यं विरोधाभावात् सहैवानुष्ठानं भविष्यति। नन्वेकं व्रतमसमाप्य व्रतान्तरमनुष्ठातुमशक्यम्। असमाप्ते व्रते पूर्वे नैव कुर्याद् व्रतान्तरमिति शास्त्रात्। मैवम्। इदं हि शास्त्रमेकव्रतस्य मध्ये व्रतान्तरोपक्रमं निषेधति। प्रकृते तु व्रतद्वयस्यापि सहैवोपक्रम इति तन्त्रेणानुष्ठानं भविष्यति। नन्वऽस्त्वेवं खण्डतिथौ, सम्पूर्णतिथौ त्वेकादशीद्वादश्युपवासौ द्वौ नैरन्तर्येण प्राप्नुतः। तत्र पारणमन्तरेण प्रथमोपवासस्यासमाप्तत्वाद् द्वितीयोपवासस्य प्रक्रमो न सम्भवतीतिचेन्मैवम्। अद्भिः पारणं कृत्वा द्वितीयोपवासस्य प्रक्रमयितुं शक्यत्वात्। तादृशं तु पारणमशितानशितोभयात्मकम्। तत्राशितरूपत्वात् पूर्वोपवासं परि-

समापयति । अनशितरूपत्वेनोत्तरोपवासं न विहन्ति । एतच्च द्व्यात्मकत्वं दर्शपूर्णमासप्रकरणे याजमानब्राह्मणे श्रूयते– यदा नाश्नानुपवसेत् क्षौधुकः स्याद्यदश्नीयात् रुद्रोऽस्य पशूनभिमन्येताऽपोऽश्नाति तन्नेवाशितं न क्षौधुको भवति नास्य रुद्रः पशूनभिमन्यत इति । तस्मादुदकपारणेनोपवासद्वयनिर्वाहः । एतच्च सर्वतिथिसाधारणम् । प्रकृते ह्येकादशीद्वादश्योर्दैवतैक्यादुदकपारणमन्तरेणापि न कश्चिद्दोषः । अत एव स्मर्यते । एकादशीमुपोष्यैव द्वादशीं समुपोषयेत् । न तत्र विधिलोपः स्यादुभयोर्दैवतं हरिरिति ॥ उपवासद्वयाशक्तौ केवलद्वादश्युपवासेनोभयोः फलं सिद्ध्यति । तथाच स्मृतिः । एकामेकादशीं भुक्त्वा द्वादशीं समुपोषयेत् । पूर्वोपवासजं पुण्यं सर्वं प्राप्नोत्यसंशयमिति ॥ द्वादश्यां काम्योपवासो मार्कण्डेयेन दर्शितः । द्वादश्यामुपवासेन सिद्धार्था भूप सर्वशः । चक्रवर्त्तित्वमतुलं सम्प्राप्ता अतुलाः श्रिय इति ॥ इति द्वादशीनिर्णयः ॥

अथ त्रयोदशी निर्णीयते ॥ सा च शुक्लकृष्णपक्षभेदेन व्यवतिष्ठते । तत्र शुक्लत्रयोदशी पूर्वविद्धा ग्राह्या । तदुक्तं ब्रह्मवैवर्त्ते। त्रयोदशी प्रकर्त्तव्या द्वादशीसहिता मुने । भूतविद्धा न कर्त्तव्या दर्शः पूर्णा कदाचन ॥ वर्जयित्वा मुनिश्रेष्ठ सावित्रीव्रतमुत्तममिति ॥ यद्यप्यत्र शुक्लपक्षशब्दो नास्ति, तथापि कृष्णत्रयोदश्याः परविद्धाया वाचनिकत्वात् पूर्वविद्धतायाः शुक्लपक्षविषयत्वं परिशिष्यते । सायङ्कालत्रिमुहूर्त्तमात्रव्यापित्वेन पूर्वविद्धतायां प्राप्तायां प्रतिपद इवापराह्णसम्बन्धोऽपेक्षित इति द्रष्टव्यम् । तदुक्तं स्कन्दपुराणे । त्रयोदशी प्रकर्त्तव्या या भवेदापराह्णिकीति ॥ कृष्णत्रयोदश्याः परविद्धत्वमुक्तं निगमे । षष्ठ्यष्टमी अमावास्या कृष्णपक्षे त्रयोदशी । एताः परयुताः पूज्याः पराः पूर्वयुतास्तथे-

ति ॥ यत्तु वृद्धवसिष्ठः। द्वितीया पञ्चमी वेधाद्दशमी च त्रयोदशी। चतुर्दशी चोपवासे हन्युः पूर्वोत्तरा तिथीरिति ॥ तच्छुक्लपक्षविषयम्। यदा तु कृष्णपक्षे परविद्धा न लभ्यते, तदा पूर्वविद्धा ग्राह्या। तदाह वसिष्ठः। एकादशी तृतीया च षष्ठी चैव त्रयोदशी। पूर्वविद्धाऽपि कर्त्तव्या यदि न स्यात् परेऽहनीति ॥ अनङ्गत्रयोदशी पूर्वविद्धा। तदाह संवर्त्तः। कृष्णाऽष्टमी बृहत्तपा सावित्री वटपैतृकी। अनङ्गत्रयोदशी रम्भा उपोष्याः पूर्वसंयुता इति ॥ अनङ्गत्रयोदशी भविष्यत्पुराणे दर्शिता। मार्गशीर्षेऽमले पक्षे इत्युपक्रम्य व्रतं विधाय, अनङ्गेन कृता ह्येषा तेनानङ्गत्रयोदशीत्युपसंहारात्। नन्वमले पक्ष इति शुक्लपक्ष एव तद्व्रतं विहितम्। तथाच, त्रयोदशी प्रकर्त्तव्या द्वादशीसहितेत्यनेन सामान्यशास्त्रेणैवानङ्गत्रयोदश्याः पूर्वविद्धत्वं प्राप्तम्। बाढम्। तदेवानेन विशेषशास्त्रेण विस्पष्टीक्रियते ॥ इति त्रयोदशीनिर्णयः॥ अथ चतुर्दशीनिर्णीयते ॥

अत्रापि शुक्लकृष्णपक्षभेदेन व्यवस्था भवति। तत्र युग्मशास्त्रेण शुक्लचतुर्दशी परविद्धा ग्राह्या। तथा व्यासोऽपि, शुक्ला चतुर्दशी ग्राह्या परविद्धा सदा व्रत इति। पूर्वविद्धाप्रतिषेध उत्तरविद्धाविधिश्चेत्युभयं भविष्यत्पुराणे पठ्यते॥ सदा कार्या त्रयोदश्या न तु युक्ता चतुर्दशी। पौर्णमासीयुता सा स्याच्चतुर्दश्या च पूर्णिमेति ॥ नारदीयेऽपि। तृतीयैकादशी षष्ठी शुक्लपक्षे चतुर्दशी। पूर्वविद्धा न कर्त्तव्या कर्त्तव्या परसंयुतेति ॥ यत्तु भाद्रशुक्लचतुर्दश्यामनन्तव्रतं भविष्योत्तरेऽभिहितम्, तत्र पूर्वविद्धा परविद्धा वा मध्याह्नव्यापिनी ग्राह्येति केचिदाहुः। लिङ्गं च तत्र प्रमाणत्वेन उदाहरन्ति। मध्याह्ने भोज्यवेलायां समुत्तीर्य सरित्तटे। ददर्श शीला सा स्त्रीणां समूहं रक्तवाससाम् ॥ चतुर्दश्यामर्चयन्तं भक्त्या

देवं पृथक् पृथगिति॥ अत्र मध्याह्ने भोज्यवेलायामित्यनेन मध्याऽह्नस्य कर्मकालत्वं प्रतीयते । अतस्तद्व्यापिनी तिथिर्ग्राह्या । नैतत्सारम् । यथा विनायकव्रते, मध्याह्ने पूजयेन्नृपेति मध्याह्नः कर्मकालत्वेन विहितः । नाऽत्र तथा विधिरस्ति । उदाहृतं तु लिङ्गमर्थवादगतत्वान्न स्वातन्त्र्येण कस्यचिदर्थस्य प्रमापकं, किन्तु सति प्रमाणान्तरे तस्योपोद्बलकं भवति । न चात्र प्रमाणान्तरं पश्यामः । अतो न मध्याह्नः कर्मकालः । तथा सति ह्यौदयिकी ग्राह्येति वचनेन युग्मशास्त्रादिभिश्चोदयव्यापिनी ग्राह्या । सा च तिथ्यन्तरवत् त्रिमुहूर्त्तेति मुख्यः कल्पः । द्विमुहूर्त्तेत्यनुकल्पः । एवं सति शिष्टाचारोऽप्यनुगृहीतो भवति । चैत्रश्रावणचतुर्दश्यौ शुक्लपक्षे अपि रात्रियोगिन्यौ ग्राह्ये इति । तथाच बौधायनः । मधोः श्रावणमासस्य शुक्ला या तु चतुर्दशी । सा रात्रिव्यापिनी ग्राह्या परा पूर्वाह्णगामिनीति ॥ परा मासान्तर्वर्त्तिनी शुक्लचतुर्दशी । कृष्णचतुर्दशी तु पूर्वविद्धैव ग्राह्या । तथाचापस्तम्बः । कृष्णपक्षेऽष्टमी चैत्र कृष्णपक्षे चतुर्दशी । पूर्वविद्धा तु कर्त्तव्या परविद्धा न कस्यचिदिति ॥ अपराह्णव्यापित्वे तुं शुक्लचतुर्दश्यपि पूर्वविद्धा ग्राह्या । तथा स्कन्दपुराणे । चतुर्दशी च कर्त्तव्या त्रयोदश्या युता विभो । मम भक्तैर्महाबाहो भवेद्या चापराह्णिकी ॥ दर्शविद्धा न कर्त्तव्या राकाविद्धा कदाचनेति॥ अत्र, मम भक्तैरितीश्वरोक्तिलिङ्गाच्छिवचतुर्दशीविषयत्वं द्रष्टव्यम् । तदेवं व्रतान्तरेषु चतुर्दशी निर्णीता ॥

अथ शिवरात्रिव्रतं निर्णीयते । तत्रेदं चिन्त्यते— किमयं शिवरात्रिशब्दो रूढः, किं वा यौगिकः, उत लाक्षणिकः, अथवा योगरूढ इति । किं तावत् प्राप्तम् । रूढ इति । तिथिविशेषे शिवरात्रिशब्दस्य सञ्ज्ञारूपेण स्मरणात् । तथाच नागरखण्डे

माघमासस्य शेषे या प्रथमा फाल्गुनस्य च। कृष्णे चतुर्दशी सा तु शिवरात्रिः प्रकीर्त्तितेति॥ कामिके, माघमासेऽसिते पक्षे विद्यते या चतुर्दशी। तद्रात्रिः शिवरात्रिः स्यात् सर्वपुण्यशुभावहे- ति। यद्यप्यत्र शिवस्य रात्रिः शिवरात्रिरित्यवयवार्थः प्रतीयते तथापि योगात् रूढेर्बलवत्त्वाद्योगोऽत्र न ग्राह्यः। प्राबल्यं चाश्व- कर्णादिशब्देष्ववगम्यते। अश्वस्य कर्ण इत्यवयवार्थप्रतीतावपि तमुपेक्ष्य रूढ्या वृक्षविशेषवाचित्वस्वीकारात्। ननु काकदन्त- परीक्षासमानोऽयं विचारः। यद्ययं शिवरात्रिशब्दो रूढो, यदि वा यौगिकः। उभयथाप्यनुष्ठाने विशेषाभावात्। मैवम्। अस्त्येव महान् विशेषः। यौगिकत्वे शिवसम्बन्धिव्रतजातं सर्वं यस्यां रात्रावनुष्ठीयते सा सर्वा शिवरात्रिः स्यात्। माघमासादिपदं च तदानीमुपलक्षणं भवेत्। रूढिपक्षे तु माघमासादेर्विशेषणत्वात् तद्विशिष्टाया एकस्या एव तिथेः शिवरात्रित्वम्। अतः कर्त्तव्य एव विचारः। तत्राहीनन्यायेन रूढिमेवाद्रियामहे। तस्य च न्या- यस्य सङ्ग्राहकावेतौ श्लोकौ भवतः। अहीनस्य द्वादशेति प्रकृतौ विकृतावुत। न हीन इति योगेन प्रकृतौ तद्धि कल्प्यताम्॥ शीघ्र- धीहेतुतो रूढेरहीने विकृताविदम्। उत्कृष्यतां द्वादशत्वं साह्ना- त् प्रकृतकर्मणः॥ अयमर्थः। ज्योतिष्टोमे श्रूयते। तिस्र एव सा- ऽह्नस्योपसदो द्वादशाहीनस्य यज्ञस्य सवीर्यत्वायेति॥ अह्ना सह वर्तते इति साह्नः। एकदिननिष्पाद्यो ज्योतिष्टोमः। तस्य प्राची- नेषु त्रिषु दिनेष्वङ्गत्वेनानुष्ठेया होमा उपसच्छब्दवाच्याः। ता- स्तिस्र उपसदो विधाय पुनरहीनशब्दवाच्यस्य कर्मणो द्वादशो- पसदो विधीयन्ते। तत्र संशयः। किमिदं द्वादशोपसत्त्वं द्वि- रात्राद्यहीनप्रकृतिभूते साह्नशब्दवाच्ये प्रकृते ज्योतिष्टोमे निविशते, आहोस्विदहीनशब्दवाच्ये विकृतिरूपे द्विरात्रादावुत्कृष्यत इति।

तदर्थमिदं चिन्त्यते । अहीनशब्दो यौगिको, रूढो वेति । तत्र न हीन इति व्युत्पत्तेर्विस्पष्टं प्रतिभासाद्यौगिक एवायम् । तदर्थश्च प्रकृतावुपपन्नः साङ्गप्रधानस्य सर्वस्य साक्षाद्वाचकशब्दैरेवोपदिष्टत्वेन हीनत्वाभावाद्विकृतौ तु विशेष एव वाचकशब्दैरुपदिश्यते । इतरत्र सर्वमतिदेशात् प्राप्यते । अत उक्तिसङ्कोचाद् विकृतेर्हीनत्वम् । एवञ्च सति अहीनशब्दस्य ज्योतिष्टोमे प्रवृत्तिसम्भवात् प्रकरणानुग्रहणाच्च तत्रैव द्वादशत्वं निविशते । नच पूर्ववाक्यविहितेन त्रित्वेन बाधः शङ्कनीयः । वाक्ययोः समानबलत्वेन व्रीहियववद्विकल्पोपपत्तेः । तस्माज्ज्योतिष्टोमे एव द्वादशत्वविधिरिति प्राप्ते ब्रूमः । विकृतिरूपे द्विरात्रादाविदं द्वादशत्वं विधीयते । कुतः । अहीनशब्दस्य श्रौतप्रयोगबाहुल्येन तत्रैव रूढत्वात् । रूढिश्च शीघ्रबुद्धिहेतुत्वेन योगाद् बलीयसी । योगे त्ववयवार्थं प्रथमतो निश्चित्य पश्चात्समुदायार्थो निश्चेतव्य इति विलम्बः । नचात्र प्रकरणविरोधः शङ्कनीयः । बलीयसा वाक्येन प्रकरणस्य बाधितत्वात् । तस्मादिदं द्वादशत्वं प्रकृतज्योतिष्टोमादुत्कृष्य विकृतिषु द्विरात्रादिषु निवेशनीयमिति । अत्र यथा रूढोऽहीनशब्दस्तथा शिवरात्रिशब्दोऽपि रूढ इति प्रथमः पक्षः । अपर आह । यौगिक एव अयं शिवरात्रिशब्दः । कुतः ? । शिवसम्बन्धमुपजीव्य तच्छब्दस्य प्रवृत्तत्वात् । तथाच स्कन्दपुराणे । माघस्य कृष्णपक्षे या तिथिश्चैव चतुर्दशी । शिवरात्रिस्तु सा ख्याता सर्वपापनिषूदनी ॥ तस्य रात्रिः समाख्याता शिवरात्रिः शिवप्रिया । तस्यां सर्वेषु लिङ्गेषु सदा संक्रमते हरः ॥ यानि कानि च लिङ्गानि चराणि स्थावराणि च । तेषु संक्रमते देवि तस्यां रात्रौ यतो हरः ॥ शिवरात्रिस्ततः प्रोक्ता तेन सा हरवल्लभेति ॥ शिवरहस्ये । तत्प्रभृत्येव देवर्षे माघकृष्णचतुर्दशी । शिवरात्रिः समा-

ऽव्यवस्थापितौ । तत्र तिथिक्षयवृद्ध्योः सन्धिविषये किञ्चिद् विशेषमाह कात्यायनः । परेऽह्नि घटिका न्यूनास्तथैवाभ्यधिकाश्च याः । तदर्द्धक्लृप्त्या पूर्वस्मिन् ह्रासवृद्धी प्रकल्पयेद् इति ॥ लौगाक्षिरपि । तिथेः परस्या घटिकास्तु याः स्युर्न्यूनास्तथाचाभ्यधिकास्तु तासाम् * अर्द्धं वियोज्यं च तथा प्रयोज्यं ह्रासे च वृद्धौ प्रथमे दिने तदिति॥ पूर्वेद्युरमावास्या पञ्चदशघटिका, परेद्युः प्रतिपदपि तावती तदा यथास्थितत्वमेवोपजीव्य सन्धिर्विज्ञेयः । यदा प्रतिपदः षड् घटिकाः क्षीयन्ते तदा घटिकात्रयह्रासोऽमावास्यायां योजनीयः । तस्मिन् योजिते द्वादशघटिकामावास्या भवति तदा वर्त्तमानात् पूर्वं सन्धिः सम्पद्यते। अनेनैव न्यायेन घटिकात्रयवृद्धौ योजितायामष्टादशघटिकाऽमावास्या भवति । तथा सत्यावर्त्तनादूर्ध्वं सन्धिर्भवति। इत्येवं सन्धिं विज्ञाय तदनुसारेणाऽन्वाधानेष्टी अनुष्ठातव्ये । इतीष्टिनिर्णयः ॥

नन्विष्टिकालवद्ग्रहणकालोऽप्यत्र निर्णेतव्यः । पर्वप्रतिपत्सन्ध्युपजीवनेन प्रवृत्तत्वात् । तथाच वृद्धगार्ग्यः । पूर्णिमाप्रतिपत्सन्धौ राहुः सम्पूर्णमण्डलम् । ग्रसते चन्द्रमर्कं च दर्शप्रतिपदन्तर इति ॥ ब्रह्मसिद्धान्ते । यावान् कालः पर्वणः स्यात्तावत्प्रतिपदादिमः । रवीन्दुग्रहणेऽनेहा स पुण्यो मिश्रणाद्भवेदिति ॥ अनेहा कालः । बाढम् । यद्यप्यस्ति सन्ध्युपजीवनं, तथापि निर्णेतव्यांशस्य तिथिविषयस्याभावादस्मिन् प्रकरणे न तद्योग्यम् । कर्त्तव्यविशेषस्तूपरितनप्रकरणे निरूपयिष्यते ॥

इति श्रीमाधवीये द्वितीयादितिथिनिर्णयाख्यं
चतुर्थं प्रकरणम् ॥ ४ ॥

## अथ पञ्चमं प्रकरणम् ॥ ५ ॥

तृतीयचतुर्थाभ्यां प्रकरणाभ्यां प्रतिपदाद्याः पञ्चदश्यन्ताः सर्वास्तिथयो निर्णीताः । अथ प्रकीर्णकरूपे पञ्चमप्रकरणे नक्षत्रविशेषादयः कालविशेषेषु कर्त्तव्यविशेषाश्च सङ्क्षेपेण निरूप्यन्ते । अत्रापि तिथिवत् सम्पूर्णनक्षत्रे सन्देहाभावात् खण्डनक्षत्रे निर्णयो वक्ष्यते । स च निर्णयो दर्शितो विष्णुधर्मोत्तरे । उपोषितव्यं नक्षत्रं यस्मिन्नस्तमियाद्रविः । पूज्यते यत्र वा राम निशीथे शशिना सहेति ॥ अत्रास्तमययोगो निशीथयोगश्चेति योगद्वयं प्रयोजकम् । अस्तमययोगो मुख्यः कल्पो, निशीथयोगोऽनुकल्पः । योगद्वये लब्धे सति अनुष्ठानमतिप्रशस्तम् । यदा तु पूर्वेद्युः केवलो निशीथयोगः परेद्युः केवलोऽस्तमययोगस्तदा मुख्यकल्पानुसारेण परेद्युरेवोपवासः । तथा सति प्रातः सङ्कल्पकाले नक्षत्रसद्भावोऽपि लभ्यते । निशीथे शशिना युनेति ज्योतिःशास्त्रसिद्धस्य शशियोगस्य विवक्षितत्वान्नक्षत्रसद्भावमात्रमभिधीयत इत्यवगन्तव्यम् । दिनद्वयेऽप्यस्तमययोगाभावे निशीथयोगेन पूर्वेद्युरेवोपवासः । तदाह सुमन्तुः । यत्रार्द्धरात्रादर्वाक्तु नक्षत्रं प्राप्यते तिथौ । तन्नक्षत्रव्रतं कुर्यादतीते पारणं भवेदिति ॥ नात्र तिथिष्विवैकभक्तनक्तयोर्मध्याह्नप्रदोषव्याप्तिभ्यां निर्णयः, किन्तूपवासनक्षत्र एव तदुभयोः कर्त्तव्यता। तदुक्तं स्कन्दपुराणे । तत्र चोपवसेदृक्षे यन्निशीथादधो भवेत् । उपवासे यदृक्षं स्यात्तद्धि नक्तैकभक्तयोरिति ॥ यत्तु विष्णुधर्मोत्तरे । सा तिथिस्तच्च नक्षत्रं यस्यामभ्युदितो रविः । तथा कर्माणि कुर्वीत ह्रासवृद्धी न कारणमिति ॥ तदुपवासव्यतिरिक्तव्रतादिविषयम् । यदपि बौधायनवचनम् । सा तिथिस्तच्च नक्षत्रं यस्यामभ्युदितो रविः । वर्द्धमानस्य पक्षस्य हाने त्वस्तमयं प्रतीति ॥

तत्पितृकार्यविषयम् । यदपि मार्कण्डेयेनोक्तम् । तन्नाक्षत्रमहोरात्रं यस्मिन्नस्तमितो रविः । यस्मिन्नुदेति सविता तन्नाक्षत्रं भवेद्दिनमिति ॥ तस्यायमर्थः । द्विविधो नक्षत्रसम्बन्धी कालविशेषः ॥ अहोरात्रो दिनं च । तत्रोदितं कर्माऽपि द्विविधम् । अहोरात्रसाध्यं, दिनसाध्यं च । उपवासैकभक्तादिकमहोरात्रसाध्यम् । यद्यपि विशिष्टकालनिष्पाद्यं भोजनमेकभक्तादेः स्वरूपं तथापि तस्मिन्नहोरात्रे भोजनान्तरस्यैकभक्तादिनियमघातितया भोजनान्तरपरित्यागसहितस्यैव भोजनस्यैकभक्तादिस्वरूपत्वादहोरात्रसाध्यत्वमप्यविरुद्धम् । दिनमात्रसाध्यानि तु दानव्रतश्राद्धानि । तेषामहन्येव विधानात् । तत्रोपवासादौ नाक्षत्रोऽहोरात्रो ग्रहीतव्यः । व्रतादौ तु नाक्षत्रं दिनं ग्रहीतव्यम् । अहोरात्रस्य नाक्षत्रत्वं सूर्यास्तमयकाले नक्षत्रव्याप्त्या संपद्यते । दिनस्य तु नाक्षत्रत्वं सूर्योदये नक्षत्रव्याप्त्या सम्भवतीति । यद्यपि, यस्मिन्नुदेति सवितेत्यत्र सूर्योदयकाले नक्षत्रसद्भावमात्रं प्रतीयते, न तु परिमाणविशेषः । तथापि त्रिमुहूर्त्तपरिमाणस्य तिथौ क्लृप्तत्वात्तदेवात्रानुसन्धेयम् । ननु दानव्रतवच्छ्राद्धेऽपि नाक्षत्रदिनस्वीकारे प्रातःकालमात्रव्यापिनक्षत्रेऽपि श्राद्धं प्रसज्ज्येत । नैवम् । अपराह्णस्य श्राद्धकालत्वेन तद्व्याप्तेरपेक्षितत्वात् । तथाच स्मृतिः । नक्षत्रे खण्डिते येन व्याप्तः कालस्तु कर्मणः । नक्षत्रकार्याण्येवं तिथिकर्म तथैव तु ॥ नच तेनैव न्यायेनैकभक्ते मध्याह्नव्यापिनक्षत्रं ग्राह्यमिति शङ्कनीयम् । उपवासनक्षत्रस्यैकभक्ते प्रतिपदोक्तत्वात् । यद्यपि स्मृतिवचनं, तिथीनामान्तिमो भागस्तिथिकर्मसु पूजितः । ऋक्षाणां पूर्वभागस्तु ऋक्षकर्मसु पूजित इति । तत्र तिथ्यन्तस्य पूज्यत्वं दानव्रतविषयम् । नक्षत्रपूर्वभागपूज्यत्वम् उपवासादिविषयम् । उपवासादिव्यतिरिक्ते तु दैवे कर्मणि नक्षत्रस्याप्यन्य-

भागपूज्यत्वं द्रष्टव्यम्। नक्षत्रविशेषेषु पूर्वरूपस्य लिङ्गस्य, श्रवणेन तु यत् कर्म उत्तराषाढसंयुतम् * संवत्सरकृतोऽध्यायस्तत्क्षणादेव नश्यति ॥ धनिष्ठासंयुतं कुर्याच्छ्रावणं कर्म यद् भवेत्। तत् कर्म सफलं विद्यादुपाकरणसंज्ञितमिति निषिद्धत्वात्। योगेषु तु कस्यचिल्लिङ्गस्यं पूर्वेद्युर्निशीथमात्रव्याप्ति प्रत्यसूचकत्वात् सायङ्कालादिव्याप्तिर्ग्राह्या। यदि योगः पूर्वेद्युर्निशीथमात्रं व्याप्नुयात्तदा परेद्युरहनि पारणं न प्राप्नुयात्। रात्रौ पारणस्य निषिद्धत्वात्। अतोऽहन्येव व्यतीपातपारणं ब्रुवच्छास्त्रं पूर्वेद्युर्दिवसे सायंकालादियोगं प्रयोजकं सूचयति। तस्माद्विष्कम्भादियोग उपवासादौ पूर्वविद्धो ग्रहीतव्यः। दानव्रतयोरुदयव्यापी ग्राह्यः। श्राद्धस्य तु कर्मकालव्यापीति निर्णेतव्यम्। बववालवाऽऽदिकरणानां तिथ्यर्द्धपरिमितत्वेन दिनद्वयाव्यापित्वात् सन्देहो नास्ति। तस्मादुदयेऽस्तमये वा यस्मिन् दिने करणसद्भावस्तस्मिन्नेव दिने तत् कर्मानुष्ठेयम्। यदा तु सायंसन्ध्यामारभ्य परेद्युरुदयात् प्रागेव करणं समाप्येत तत्र कथमिति चेत्। तदा भद्राकरणोक्तन्यायेन सर्वेषु करणेषु निर्णय इति ब्रूमः। भद्राकरणे च निर्णयो भविष्योत्तरे भद्राव्रते पठ्यते। यस्मिन् दिने भवेद्भद्रा तस्मिन्नहनि भारत। उपवासस्य नियमं कुर्यान्नारी नरोऽपि वा। यदि रात्रौ भवेद् विष्टिरेकभक्तं दिनद्वये। कार्यं तेनोपवासः स्यादिति पौराणिको विधिः॥ प्रहरस्योपरि यदा स्याद् विष्टिः प्रहरद्वयम्। उपवासस्तदा कार्य एकभक्तं ततोऽन्यथेति॥ उदयादारभ्य यावदस्तमयं विष्टिसत्तायां नास्त्युपवासे सन्देहः। यदा तु प्रहरमात्रं विष्टिर्नास्ति तस्योपरि प्रहरत्रयं विष्टिर्भवति। तदा कृत्स्नदिनव्याप्तेर्भद्राया अभावेऽप्येकदेशव्याप्तेः सद्भावादुपवासोऽनुष्ठेयः। अन्यथेत्यनेनैकदेश-व्याप्त्यभावोऽपि विवक्षितः। तस्मिन्

पक्षे समनन्तरातीतवचनाद्दिनद्वयेऽप्येकभक्तं कार्यम् । यस्तु भद्राव्रतं सङ्कल्प्याहोरात्रमुपोषितुं न शक्नुयाद्, असौ भद्रायुक्तघटिकासु भोजनं परित्यजेत् । भद्रारहितकाले भुक्त्वाऽपि उपवासान्न हीयते । तथाच भविष्योत्तरे पठ्यते । स्नातः संपूज्य तामेव ब्राह्मणं च स्वशक्तितः । ततो भुञ्जीत राजेन्द्र यावद्भद्रा न जायते ॥ अथवाऽन्तेऽपि भद्रायाः कामतो वाग्यतः शुचिः । न किञ्चिद्भक्षयेत् प्राज्ञो यावद्भद्रा प्रवर्त्तत इति ॥ अहश्चरमभागे यदा भद्राप्रवेशस्तदानीमेकदेशे भद्रायोगिनो दिनस्य तद्व्रतार्हत्वादशक्तस्य भद्राप्रवेशात् प्रागेव भोजने प्राप्ते सत्यऽभुक्तेन पूजादेरनुष्ठेयत्वाद्भद्रारहितेऽपि काले पूजादिकं न विरुध्यते । यदा तु भद्राया अन्ते भुङ्क्ते तदा कर्मकालव्याप्तिशास्त्राद्भद्रोपेतकाल एव पूजादि कर्त्तव्यम् । पक्षद्वयेऽपि भद्रायुक्तघटिकासु न किञ्चिद्भक्षयेत् । तावता भद्रोपवासः पूर्यते । बवादिकरणेषु कस्यापि विशेषस्य शास्त्रेणानुक्तत्वात् । भद्रायां क्लृप्तस्य न्यायस्यातिक्रमे कारकस्यापि विशेषस्य शास्त्रेणानुक्तत्वात् । भद्रायां क्लृप्तस्य न्यायस्यातिक्रमे कारणाभावाच्चायं निर्णयप्रकारः सर्वोऽपि योजनीयः । नच तिथिनक्षत्रयोगकरणानां पञ्चाङ्गान्तःपातिनां निर्णयं कृत्वा तदन्तःपाती शास्त्रीयकर्मोपयोगी वारः कुत उपेक्षित इति शङ्कनीयम् । अहोरात्रपरिमितत्वेन वारे सन्देहाभावात् । तदेवं नक्षत्रयोगकरणानि निर्णीतानि ॥

अथ संक्रान्तिर्निर्णीयते । मेषादिषु द्वादशराशिषु क्रमेण सञ्चरतः सूर्यस्य पूर्वस्माद्राशेरुत्तरराशौ संक्रमणं प्रवेशः संक्रान्तिः । अतस्तद्राशिनामपुरःसरं सा संक्रान्तिर्व्यपदिश्यते । राशयश्चामी मेषवृषमिथुनकर्कटसिंहकन्यातुलावृश्चिकधनुर्मकरकुम्भमीननामकाः । तेषु द्वादशसु चत्वारि त्रिकाणि भवन्ति । तत्रैकैकस्मिंस्त्रिके क्रमेण चरास्थिरद्विस्वभावास्त्रयो राशयः । तथा चतुर्षु त्रिकेषु मध्ये

पश्यगा वृषभसिंहवृश्चिककुम्भनामकाः स्थिरराशयश्चत्वारः । तेषु विष्णुपदमिति नाम स्मृतिषु प्रसिद्धम् । ये तदन्तिगा मिथुनकन्याधनुर्मीननामका द्विस्वभावा राशयस्ते षडशीतिमुखसंज्ञकाः । ये पुनर्मेषकर्कतुलामकररूपाश्चरराशयस्तेषु मेषतुले विषुवसंज्ञके । कर्कटमकरावयनसंज्ञकौ । तदेतत् सर्वं वृद्धवसिष्ठ आह । अयने द्वे विषुवे द्वे चतस्रः षडशीतयः । चतस्रो विष्णुपद्यश्च संक्रान्त्यो द्वादश स्मृताः ॥ झषकर्कटसंक्रान्ती द्वे उदग्दक्षिणायने । विषुवे तु तुलामेषौ गोलमध्ये ततोऽपराः ॥ कन्यायां मिथुने मीने धनुष्यपि रवेर्गतिः । षडशीतिमुखाः प्रोक्ताः षडशीतिगुणैः फलैः ॥ वृषवृश्चिकसिंहेषु कुम्भे चैव रवेर्गतिः । एतद्विष्णुपदं नाम विषुवादधिकं फलैरिति॥ विषुवाभ्यामयनाभ्यां युक्तं राशिचतुष्कं गोल इत्यभिधीयते । तत्र मेषाख्यविषुवस्य कर्कटाख्यायनस्य च मध्ये विष्णुपदसंज्ञको वृषभः षडशीतिसंज्ञकं मिथुनं च तिष्ठति । तथाच कर्कटायनस्य तुलाविषुवस्य च मध्ये सिंहकन्यके । तुलामकरयोर्मध्ये वृश्चिकधनुषी । एवमन्यदप्युदाहार्यम् । गालवोऽप्याह । स्थिरभे विष्णुपदं षडशीतिमुखं द्वितनुभे तुलामेषौ विषुवं तुर्ये दक्षिणमयनं सौम्यं मृगे सूर्य इति शब्दवाच्यो राशिः । स्थिरराशौ स्थिते सूर्ये सति विषुवं भवति । सूर्ये कर्कटे दक्षिणायनम् । मृगे मकरे सौम्यं सोमदिङ्नामकमुत्तरायणम् । तैरेतैः संज्ञाभेदैः राशयो व्यवह्रियन्ते । तद्राशिसम्बन्धात्तद्राशिसंक्रान्तीनामपि तान्येव नामानि । तासु च संक्रान्तिषु होमस्नानादिकमन्वयव्यतिरेकाभ्यां शातातप आह । संक्रान्तौ यानि दत्तानि हव्यकव्यानि दातृभिः । तानि नित्यं ददात्यर्कः पुनर्जन्मनि जन्मनि ॥ रविसंक्रमणे पुण्ये न स्नायाद्यदि मानवः । सप्तजन्मसु रोगी स्याद् दुःखभागीह जायत इति ॥ स्नानदानाद्यङ्गभूते संक्रान्तिकाले मुख्य-

कल्पस्यासम्भवादनुकल्प एवादर्त्तव्यः । तदाह देवलः । संक्रान्ति-समयः सूक्ष्मो दुर्ज्ञेयः पिशितेक्षणैः । तद्योगादप्यधश्चोर्ध्वं त्रिंश-न्नाडयः पवित्रिता इति ॥ देशाऽव्यवधानादत्यन्तसंश्लिष्टयोः पूर्वोत्तरराश्योर्मध्ये सूर्यः पूर्वराशिं परित्यज्य यावता कालभेदेनो-त्तरराशिं प्रविशति स लेशो योगदृष्टिं विना मांसदृष्ट्या दुर्लक्ष्यः । अतोऽनुष्ठाने मुख्यसंक्रान्तिकालासम्भवात्संक्रान्तिसम्बन्धिनौ पूर्वो-त्तरकालौ ग्रहीतव्यौ । संक्रान्तेः पूर्वोत्तरयोरेकैकस्मिंस्त्रिंशद् घटिकाः पुण्या इति सामान्येनोक्तम् । तत्र विशेषमाह वृद्धवसि-ष्ठः । अतीतानागते पुण्ये द्वे उदग्दक्षिणायने । त्रिंशत् कर्कटके नाडयो मकरे विंशतिः स्मृता इति ॥ उदगयनमतीतं सत् पुण्यं भवति । दक्षिणायनमनागतं पुण्यम् । त्रिंशदित्यादिना तदेव स्पष्टीक्रियते । कर्कटाख्याद्दक्षिणायनात् प्राचीनास्त्रिंशद् घटिकाः पुण्याः।मकराख्यादुत्तरायणादूर्ध्वकालीना विंशतिघटिकाः पुण्याः। बृहस्पतिरपि । अयने विंशतिः पूर्वा मकरे विंशतिः पराः । वर्त्त-माने तुलामेषे नाडयस्तूभयतो दशेति वचनात् । नचात्र त्रिंशद्-घटिकात्वादिना सामान्यवचनेन विरोधः शङ्कनीयः । सामान्यव-चनस्याभ्यनुज्ञापरत्वात् । विशेषवचनोक्तो घटिकासङ्कोच एव प्रशस्तः । या याः सन्निहिता नाडयस्तास्ताः पुण्यतमाः स्मृता इति देवलेनोक्तत्वात् केनाऽपि निमित्तेन सन्निहितघटिकास्वनुष्ठाना-ऽसम्भवे त्रिंशद् घटिकाः परा अवधित्वेनानुज्ञायन्ते षडशीतिषु । ततोऽपि दीर्घमवधिमाह वृद्धवसिष्ठः । षडशीत्यामतीतायां षष्टि-रुक्तास्तु नाडिका इति ॥ विष्णुपद्यां प्रशस्तकालं स एवाह । पुण्यायां विष्णुपद्यां च प्राक् पश्चादपि षोडशेति ॥ संक्रान्तीनां पूर्वोत्तरौ पुण्यकालौ निर्णीतौ । ताश्च संक्रान्तयः कदाचि-दह्नि भवन्ति । कदाचिद्रात्रौ भवन्ति । तद्भेदादनुष्ठानभेद-

माह वृद्धवसिष्ठः। अह्नि संक्रमणे पुण्यमहः कृत्स्नं प्रकीर्तितम्। रात्रौ संक्रमणे भानोर्दिनार्द्धं स्नानदानयोः ॥ अर्द्धरात्रादधस्तस्मिन् मध्याह्नस्योपरि क्रिया। ऊर्ध्वं संक्रमणे चोर्ध्वमुदयात्प्रहरद्वयम्। पूर्णे चेदर्धरात्रे तु यदा संक्रमते रविः। प्राहुर्दिनद्वयं पुण्यं मुक्त्वा मकरकर्कटाविति ॥ अह्नि यदा संक्रान्तिर्भवति तदा कृत्स्नस्याह्नः पुण्यत्वम्। रात्रौ संक्रमणे पूर्वोत्तरदिनार्द्धयोः पुण्यत्वं विदधता वचनेनार्थाद्रात्रौ स्नानदानादिकं प्रतिषिद्ध्यते। एवं सत्युदयानन्तरभाविनि दक्षिणायने पूर्वभागे प्राशस्त्यं बाधित्वोत्तरभागेऽनुष्ठानं भवति। अस्तमयप्राचीनक्षणभाविन्युत्तरायणे चोत्तरभागप्राशस्त्यं परित्यज्य पूर्वभागेऽनुष्ठातव्यम्। उत्तरभागप्राशस्त्यं तु मध्याह्नादिसंक्रमणविषयम्। तत्राहन्येव हेयोपादेययोः पूर्वोत्तरभागयोः सम्भवादनेनैव न्यायेन कर्कटेऽपि मध्याह्नभाविनि पूर्वभागप्राशस्त्यं भवति। अस्तमयप्राचीनभाविषु षडशीतिमुखेष्वप्युत्तरभागप्राशस्त्यं परित्यज्य मकरन्यायेन पूर्वभागप्राशस्त्यं विधातव्यम्। उदयानन्तरभाविषु तेषु वचनान्तराविरोधेन उत्तरभाग एवानुष्ठानसम्भवात्तद्विरुद्धं पूर्वभागप्राशस्त्यं न विधीयते। उभयभागप्राशस्त्योपेतेषु विषुवद्विष्णुपदेषु मध्याह्नभाविषु पूर्वत्रोत्तरत्र वा स्वेच्छयानुष्ठातव्यम्। उदयानन्तरभाविषु तेषु पूर्वभागप्राशस्त्यं बाध्यते। अस्तमयप्राप्तेषु तेषु उत्तरप्राशस्त्यं बाध्यत इति विवेकः। एतद्वचनानुसारेण यस्य संक्रमणस्य यस्मिन् भागेऽनुष्ठानं तस्मिन्नेव भागे व्यवहिता नाड्यः पुण्याः, ईषत्सन्निहिताः पुण्यतराः, अत्यन्तसन्निहिताः पुण्यतमा द्रष्टव्याः। यदा रात्रौ भानोः संक्रमणं भवति तदा तस्या रात्रेः पूर्वस्य चोत्तरस्य वा दिनस्यार्द्धप्रहरद्वयं स्नानदानयोः पुण्यम्। कुत्र पूर्वदिनं, कुत्र परदिनमिति विवक्षायां तदुभयमर्द्धरात्रादिति वचनेन

व्यवस्थाप्यते । रात्रेरर्द्धमर्द्धरात्रः । द्वितीयप्रहरस्य चरमघटिका तृतीयप्रहरस्य प्रथमघटिकेत्येवं घटिकाद्वयमुक्तं कालस्तस्मादर्ध-रात्रादधः संक्रमणे सति पूर्वदिनमध्याह्नस्योपरितने प्रहरद्वये क्रिया कार्या । अर्द्धरात्रादूर्ध्वं संक्रमणे सति उत्तरकालीनादुदयादूर्ध्वं प्रहरद्वयं पुण्यम् । पूर्णेऽर्द्धरात्रे घटिकाद्वये संक्रान्तौ पूर्वोत्तरदिनद्वयं कृत्स्नं पुण्यम् । तदुक्तं भविष्योत्तरे, संक्रमस्तु निशीथे स्यात् पञ्चयामाः पूर्वपश्चिमाः । संक्रान्तिकालो विज्ञेयस्तत्र स्नानादिकं चरेदिति ॥ अत्रेयं व्यवस्था । अर्द्धरात्रे यदा षडीतिस्तदानीमेतद्वचनानुसारेण पूर्वोत्तरदिनद्वयस्य पुण्यत्वाद्यद्यप्यैच्छिको विकल्पः प्राप्नोति । त-थाप्युत्तरदिने षष्टिघटिकाप्रतिपादकप्रातिस्विकवचनानुग्रहलाभा-त्तत्रैवानुष्ठातव्यम् । विषुवयोर्विष्णुपदेषु च प्रातिस्विकवचनं न नियामकम् । तस्य वचनस्य पूर्वोत्तरभागयोः साम्येन प्राशस्त्य-प्रतिपादकत्वात् । प्रकृतं वचनं पूर्वोत्तरदिने साम्येन विधत्ते । तस्मात् पूर्वस्मिन्नुत्तरस्मिन् वा स्वेच्छयाऽनुष्ठानमिति विकल्प्यते। अयनयोस्तु प्रकारान्तरं वक्ष्यते । अयनव्यतिरिक्तासु दशसु सं-क्रान्तिषु मध्यरात्रादूर्ध्वं प्रवृत्तासु परेद्युरनुष्ठानमित्यत्राऽपि नास्ति सन्देहः । षडशीत्यां तु प्रकृतवचनेन पूर्वेद्युरनुष्ठानं प्राप्तम् । षष्टि-घटिकाप्राशस्त्यप्रतिपादकप्रातिस्विकवचनेन परेद्युः प्राप्नोति । अतः सन्देहे सति पूर्वेद्युरनुष्ठानमिति निर्णयो द्रष्टव्यः । कुतः । विष्णुपद्यां धनुर्मीननृयुक्कन्यासु वै तदा । पूर्वोत्तरगतं रात्रौ भानोः संक्रमणं भवेत् ॥ पूर्वाह्णे पञ्चनाड्यस्तु पुण्याः प्रोक्ता मनीषिभिः । अपराह्णे तु पञ्चैव श्रौते स्मार्त्ते च कर्मणीति स्मृतेः ॥ यदा रात्रौ पूर्वभागगतं विष्णुपदीषडशीतिसंक्रमणं भवेत् तदा पूर्वेद्युरपराह्णे पञ्चनाड्यः पुण्याः । उत्तरभागगते संक्रमणे परेद्युः पूर्वाह्णे पञ्चनाड्यः पुण्याः । नचैवं सति प्रहरद्वयपुण्यत्वविरोध इति

वाच्यम् । पञ्चनाडिकावचनेषु पुण्याधिक्यस्य विवक्षितत्वात् । अतः प्रहरद्वयवाक्यं पुण्यमात्राभिप्रायम् । एतस्मिन्नेव विषये देवीपुराणे पठ्यते । असम्पूर्णेऽर्द्धरात्रे तु उदयेऽस्तमयेऽपि च । मानार्द्धं भास्करे पुण्यमपूर्णे शर्वरीदले ॥ अर्द्धरात्रे त्वसम्पूर्णे दिवा पुण्यमनागतम् । सम्पूर्णे उभयोर्ज्ञेयमतिरिक्ते परेऽहनीति ॥ अत्र भास्करशब्देन सूर्ययुक्तं दिनमुपलक्ष्यते । यद्वा भास्करशब्दो न सूर्ये रूढः, किन्तु यौगिकः । भासं करोतीति व्युत्पत्तिसम्भवात् । तथाच सूर्य इव भास्करशब्दो दिनेऽपि मुख्यः । तस्यापि भासं प्रत्यऽधिकरणकारकत्वात् । भास्करे दिवसे विद्यमानं प्रहरचतुष्टयं तस्यार्द्धं प्रहरद्वयमादित्यास्तमयस्योपरितन आगामिसूर्योदयात् प्राचीनः कालो रात्रिः । उदयोपरि अस्तमयात् प्राचीनः कालो दिनम् । उदयास्तमयकालौ सन्धिरूपतया प्रोक्ताभ्यां रात्रिदिवसाभ्यां पृथगिसेके । रेखामात्रस्यापि सूर्यमण्डलांशस्य दृश्यमानतया दिवसान्तःपातिनाविसपरे । सर्वथाऽपि न रात्रौ तयोरन्तर्भावः । सा च रात्रिस्त्रेधा भिद्यते । मध्यवर्त्तिघटिकाद्वयात्मक एको भागः । तस्मात् पूर्वोत्तरौ द्वौ भागौ । तत्र पूर्वभागे संपूर्णेऽर्द्धरात्र इसनेन विवक्ष्यते । तस्मिन् यदा संक्रान्तिस्तदानीं सूर्यास्तमये प्रत्यासन्नं यत्पूर्वदिनस्योत्तरार्द्धं तत्पुण्यम् । अपूर्णे शर्वरीदल इसनेनार्द्धरात्रादनन्तरभावी रात्रिभागो विवक्षितः । पूर्वोत्तरदलयोरेकैकस्यापि घटिकाया अर्द्धरात्रकालार्द्धस्य पृथक्कृतत्वादसंपूर्त्तिरवगन्तव्या । तस्मिन् घटिकान्यूने परभागे यदा संक्रान्तिस्तदानीं भाविसूर्योदये प्रत्यासन्नं दिनार्द्धं पुण्यम् । अयमेवार्थो द्वितीयश्लोके प्रपञ्च्यते । घटिकान्यूनत्वेनासंपूर्णार्द्धरात्रे पूर्वभागे यदा संक्रमणं भवति तदा यद्यपि दिवासंक्रमणमनागतं तथापि तस्य दिवसस्य उत्तरार्द्धं पुण्यम् । यदा संपूर्णेऽर्द्धरात्रे घटिकाद्वयात्मकत्वे निशीथे संक्रमणं भवेत्तदानीं

पूर्वोत्तरयोर्दिनयोः पुण्यं ज्ञेयम्। अतिरिक्ते परभागे संक्रान्तौ परेऽहनि पूर्वार्द्धं पुण्यम् । देवलोऽपि, आसन्नसंक्रमं पुण्यं दिनार्द्धं स्नानदानयोः। रात्रौ संक्रमणं भानोर्विषुवत्ययने दिने इति ॥ अयमर्थः। रात्रौ भानोः संक्रमणे विषुवन्नामके जाते सति संक्रमणप्रत्यासन्नदिनार्द्धं पुण्यम् । पूर्वरात्रसंक्रमणे पूर्वदिनस्योत्तरार्द्धं पुण्यम्। अपररात्रसंक्रमणे परदिनस्य पूर्वार्द्धमित्यवगन्तव्यम् । अयने अयननामके भानोः संक्रमणे दिवा जाते सति यथायोगं तद्दिनार्द्धं तु पुण्यं द्रष्टव्यम् । कर्कटे पूर्वार्द्धं, मकरे उत्तरार्द्धम् । एतच्च मध्यन्दिनायनविषयम्। उदयास्तमयप्रत्यासन्ने अयने पूर्वोत्तरभागप्राशस्त्यबाधया कृत्स्नदिवसपुण्यत्वनिर्णयः पूर्वमेवोक्तः । अयनव्यतिरिक्तेषु दशसु संक्रमणेषु रात्रिगतेषु यो निर्णयस्तं सर्वं पर्युदासितुं तद्वचःशेषः, मुक्त्वा मकरकर्कटाविति वर्णितः। या याः सन्निहिता नाड्यस्तास्ताः पुण्यतमा इत्युक्तेन सामान्यवचनेन रात्रिसंक्रमणेषु रात्रावेवानुष्ठानं प्रसक्तम्। तदपोह्य दशसु संक्रान्तिषु दिवानुष्ठानं विधाय मकरकर्कटयोस्तत्पर्युदासे सति पूर्वप्रसक्तं रात्रावनुष्ठानमेव पर्यवस्यति । एवं सति रात्रौ स्नानमभ्युपगच्छतो याज्ञवल्क्यवचनस्यापि कश्चिद्विषयः संपद्यते । तथाच याज्ञवल्क्यः । राहुदर्शनसंक्रान्तिविवाहात्ययवृद्धिषु । स्नानदानादिकं कार्यं निशि काम्यव्रतेषु चेति ॥ सुमन्तुरपि। रात्रौ स्नानं न कुर्वीत दानं चैव विशेषतः । नैमित्तिकं च कुर्वीत स्नानं दानं च रात्रिषु ॥ यज्ञे विवाहे यात्रायां तथा पुस्तकवचने । दानान्येतानि शस्तानि रात्रौ देवालये तथा ॥ ग्रहणोद्वाहसंक्रान्तियात्रार्त्तिप्रसवेषु च । श्रवणे चेतिहासस्य रात्रौ दानं प्रशस्यत इति ॥ ननु यथोक्तपर्युदासानुगृहीतैः पुण्यतमत्ववादिदेवलयाज्ञवल्क्यसुमन्तुवचनैर्मकरकर्कटयोर्निश्यनुष्ठानप्रापणं शास्त्रान्तरेण विरुद्धम् । तथाच भविष्योत्तरे ॥

मिथुनात् कर्कसंक्रान्तिर्यदि स्यादंशुमालिनः। प्रभाते वा निशीथे वा कुर्यादहनि पूर्वतः। कार्मुकं तु परित्यज्य झषं संक्रमते रविः। प्रदोषे चाऽर्द्धरात्रे वा स्नानं दानं परेऽहनीति॥ वृद्धगार्ग्योऽपि। यदास्तमयवेलायां मकरं याति भास्करः। प्रदोषे चार्द्धरात्रे वा स्नानं दानं परेऽहनीति। अर्द्धरात्रे तदूर्ध्वं वा संक्रान्तौ दक्षिणायने। पूर्वमेव दिनं ग्राह्यं यावन्नोदयते रविरिति॥ मैवम्। भविष्योत्तरवृद्धगार्ग्यवचनेषु राज्यनुष्ठानप्रतिषेधस्याप्रतीतेर्दिवसाऽनुष्ठानेनैवानुष्ठानप्रतिषेधकल्पने पर्युदासानुगृहीतवचनानामानर्थक्यं प्राप्नोति। तस्माच्छास्त्रद्वयेन विकल्पप्राप्तौ तत्तद्देशप्रसिद्धशिष्टाऽऽचारेण व्यवस्था द्रष्टव्या। यथोक्तानां द्वादशसंक्रान्तीनां यथोक्तेषु पुण्यकालेषु मन्दादिसंज्ञोपजीवनेन कश्चिद् विशेषो देवीपुराणे दर्शितः। द्वादशैव समाख्याताः समासंक्रान्तिकल्पनाः। सप्तधा तु प्रबोद्धव्या एकैकैव यथा शृणु॥ मन्दा मन्दाकिनी ध्वाङ्क्षी घोरा चैव महोदरी। राक्षसी मिश्रिता प्रोक्ता संक्रान्तिः सप्तधा ध्रुवम्॥ मन्दा ध्रुवेषु विज्ञेया मृदौ मन्दाकिनी तथा। क्षिप्रे ध्वाङ्क्षी विजानीयादुग्रे घोरा प्रकीर्त्तिता॥ चरे महोदरी ज्ञेया क्रूरैर्ऋक्षैस्तु राक्षसी। मिश्रिता चैव विज्ञेया मिश्रऋक्षैस्तु संक्रमे॥ द्विचतुःपञ्चसप्ताष्टनवद्वादश एव च। क्रमेण घटिका ह्येतास्तत्पुण्यं पारमार्थिकमिति॥ अत्र समाशब्दः संवत्सरवाची। समासम्बन्धिन्यः संक्रान्तिकल्पना मेषादीनां द्वादशैव समाख्याताः। तासु द्वादशसंक्रान्तिष्वेकैका मन्दादिभिर्नामभिर्व्यवहार्य्या। तानि च नामानि नक्षत्रविशेषोपजीवनेन प्रवृत्तानि। तद्यथा। ध्रुवेषु नक्षत्रेषु प्रारब्धा संक्रान्तिर्मन्दा। एवं मृदुक्षिप्रादिनक्षत्रेषु प्रारब्धा संक्रान्तिः क्रमेण मन्दाकिनीध्वाङ्क्ष्यादिनामभाग् भवति। रोहिण्युत्तरात्रयं चेति चत्वार्य्येतानि नक्षत्राणि ध्रुवाणि। रेवतीचित्रानुराधामृग-

शीर्षाणि चत्वारि मृदूनि । हस्ताश्विनीपुष्याऽभिजिन्नक्षत्राणि चत्वारि क्षिप्राणि । भरणी पूर्वात्रयं मघा चेत्येतानि पञ्चोग्राणि श्रवणपुनर्वसुशतभिषग्धनिष्ठास्वात्याख्यानि पञ्च चराणि । आश्लेषामूलार्द्राज्येष्ठानि चत्वारि क्रूराणि। कृत्तिकाविशाखाश्विन्याऽऽख्यानि मिश्राणि । सेयं सप्तधा नक्षत्रव्यवस्था ज्योतिर्ग्रन्थे मुहूर्त्तविधानसारे पठिता । क्षिप्रं च स्थिरमुग्रं च दारुणं चरमेव च । मृदु साधारणम् ऋक्षं सप्त भेदाः प्रकीर्त्तिताः ॥ कराश्विनीवाक्पतिभं तथाभिजिल्लघूनि पुण्ये गमने विभूषणे॥ हिरण्यगर्भाऽधिपमुत्तरात्रयं ध्रुवाख्यमेतद्धि नवामुनाऽमृतम् ॥ युतं भरण्या सह पूर्विकात्रयं मघा तथोग्राख्यमिदं भपञ्चकम्। भुजङ्गमं नैर्ऋतमैन्द्रमार्द्रा भवन्ति तीक्ष्णानि हि तानि सर्वदा ॥ चराणि पञ्च श्रवणं पुनर्वसू जलेशभं वासवमानिलं तथा । मृदूनि पौष्णं सुरवर्द्धकीश्वरं तथाऽनुराधाऽमृतरश्मिदैवतम् ॥ हुताशनर्क्षेण सह द्विदैवमुशन्ति साधारणसंज्ञमस्मिन्निति ॥ यथोक्तनक्षत्रविशेषोपजीवनेन प्रवृत्तमन्दादिभिः सप्तनामभिर्युत्तमेषादिसंक्रान्तौ क्रमेण द्विचतुरित्यादिसप्तविधसंख्या नाड्यः पुण्या इति यदुक्तं तत्र नास्ति सन्देह इत्यस्मिन्नर्थे पारमार्थिकः शब्दः प्रयुक्तः। मन्दायां प्रत्यासन्नं घटिकाद्वयं पुण्यं, मन्दाकिन्यां घटिकाचतुष्टयम् । ध्वाङ्क्षायां पञ्चकम् । घोरायां सप्तकम् । महोदर्यामष्टकम् । राक्षस्यां नवकम्। मिश्रितायां द्वादशकम् । मेषसंक्रान्तावुदाहृतः सोऽयं प्रकारो वृषभादिष्वेकादशसु संक्रान्तिष्वनुसन्धेयः । देवीपुराणोदाहरणाव प्राचीनग्रन्थे तत्तत्संक्रान्तिषु यः पुण्यः कालो निर्णीतस्तस्मिन् काले देवीपुराणोक्तो, द्विचतुरित्यादिकः पुण्यातिशयप्रतिपादको विशेषो द्रष्टव्यः । निर्णीतेषु संक्रान्त्यादीनां पुण्यकालेषु यत्कर्त्तव्यं स्नानदानादिकं तत्सर्वमेव शातातपवचनद्वयेनोदाहृतम्।

ब्रह्मपुराणेऽपि । नित्यं द्वयोरयनयोस्तथा विषुवतोर्द्वयोः । चन्द्रार्कयोर्ग्रहणयोर्व्यतीपातेषु पर्वसु ॥ अहोरात्रोषितः स्नानमर्घं दानं तथा जपम् । यः करोति प्रसन्नात्मा तस्य स्यादक्षयं च तत् ॥ अयने विषुवे चैव चन्द्रसूर्यग्रहे तथा । कृतोपवासः सुस्नातः सर्वपापैः प्रमुच्यते ॥ वसिष्ठोऽपि । उपोष्यैव तु संक्रान्तौ स्नातो योऽभ्यर्चयेद्धरिम् । प्रातः पञ्चोपचारेण स काम्यं फलमश्नुते॥ अयने विषुवे चैव चन्द्रसूर्यग्रहे तथा । त्रिरात्रोपोषितनरः सर्वपापैः प्रमुच्यते ॥ स्नात्वा यः पूजयेदीशं सर्वान् कामान् समश्नुते । सप्तोपोष्य रवेर्वारानादौ स्नात्वा तु संक्रमे । अर्कमभ्यर्चयेद्यस्तु स दुःखी सुखमश्नुत इति ॥ शातातपः । अयनादौ सदा देयं द्रव्यं नित्यं गृहे च यत् । षडशीतिमुखे चैव मोक्षे वै चन्द्रसूर्ययोरिति ॥ उक्तस्नानदानादिकर्त्तव्यस्य संक्रान्तिविशेषमुपजीव्य कालविशेषमाह शातातपः । कुर्यात् सदायने मध्ये विष्णुपद्यां विषुवति । षडशीत्यामन्तभागे स्नानादिविधिमादृत इति॥ गालवोऽपि। मध्ये विषुवति दानं विष्णुपदे दक्षिणायने चादौ * षडशीतिमुखेऽतीते तथोदगयने च भूरि फलमिति ॥ अयनादिषु यत्र यावान् पुण्यः कालः पूर्वं निर्णीतस्तत्र तावन्तं कालं त्रेधा विभज्य मध्ये विषुवतीत्याद्यवगन्तव्यम् । तस्मिन्नपि मध्यादिभागे सन्निहितानां नाडीनां पूर्वोदाहृतवचनेन पुण्यतमत्वं द्रष्टव्यम् । संक्रान्तिषु फलमाह भरद्वाजः । षडशीत्यां तु यद्दानं यद्दानं विषुवद्द्वये । दृश्यते सागरस्यान्तस्तस्यान्तो नैव दृश्यते इति ॥ वृद्धवसिष्ठः । अयने कोटिपुण्यं च सहस्रं विषुवे फलम् । षडशीत्यां सहस्रं तु फलं विष्णुपदेषु चेति॥ मेषादिसंक्रान्तयो यस्मिन् दिने भवन्ति तस्माद्दिनात् पूर्वेभ्य एकादशदिनेभ्यः प्राचीने दिने मेषायनं वृषायनमित्येवं तत्तन्नामाङ्कितमयनं भवति । तस्मिन्नयने स्नानादिषु च पुण्यकालमाह जाबालिः । संक्रान्तिषु

यथा कालस्तदीयेऽप्ययने तथा । अयने विंशतिः पूर्वा मकरे विंशतिः परेति ॥ मकरव्यतिरिक्तैकादशसंक्रान्तिसम्बन्धिनि त्वयने संक्रान्तिवैलक्षण्यम् । तद्यथा । मकरायने प्राचीना विंशतिघटिकाः पुण्याः । मकरसंक्रान्तौ तु पाश्चात्या विंशतिघटिकाः पुण्याः । न केवलमादित्यस्यैव संक्रमायने पुण्यकालः । किन्तु सर्वेषामपि ग्रहाणां नक्षत्रराशिसंक्रमे पुण्यकालो भवति। तदुक्तं ज्योतिःशास्त्रे। नक्षत्रराश्यो रविसंक्रमे स्युरर्वाक्परस्ताद्रसचन्द्रनाड्यः * पुण्यास्तथेन्दोस्त्रिधरा पलैर्युगेकैव नाडी मुनिभिः शुभोक्ता ॥ नाड्यश्चतस्रः सपलाः कुजस्य बुधस्य तिस्रः पलविश्वयुक्ताः । साऽर्द्धाश्चतस्रो घटिकाः पलानि गुरोस्तु सप्तैव भृगोश्चतस्रः ॥ नाड्यः पलैकं घटिका द्व्यशीतिः पलानि सप्तैव शनैश्चरस्य । आद्यन्तमध्ये जपहोमदानं कुर्वन्नवाप्नोति सुरेन्द्रधामेति ॥ अयमर्थः आदित्यस्य राशिनक्षत्रगमने अर्वाक् परश्च षोडशघटिकाः पुण्यकालः । तथा चन्द्रस्यापि घटिकैका पलानि त्रयोदशार्वाक् परतश्च पुण्यकालः । एवं मङ्गलस्य घटिकाश्चतस्रः पलमेकं च पुण्यकालः । तथा बुधस्य तिस्रो घटिकाः, त्रयोदश पलानि च पुण्यकालः । बृहस्पतेरपि सार्द्धचतस्रो घटिकाः सप्त पलानि पुण्यकालः। शुक्रस्य चतस्रो घटिकाः पलमेकं च पुण्यकालः। शनैश्चरस्य द्व्यशीतिघटिकाः पलानि सप्त पुण्यकालः । स्कान्दे नागरखण्डे । एकान्ते ते मया प्रोक्ताः कालाः संक्रान्तिपूर्वकाः। नैतेषु विद्यते विघ्नो यतश्चाऽक्षयसंज्ञिताः । अश्रद्धयापि यद्दत्तं कुपात्रेभ्योऽपि मानवैः । अकालेऽपि हि तत् सर्वं सत्यमक्षयतां व्रजेदिति॥इति संक्रान्तिनिर्णयः॥

अथ ग्रहणं निर्णीयते ॥ तत्र वृद्धगार्ग्यः ॥ पूर्णिमाप्रतिपत्सन्धौ राहुः सम्पूर्णमण्डलम् । ग्रसते चन्द्रमर्कं च दर्शप्रतिपदन्तरेति ॥ तत्र पर्वणोऽन्तभागः स्पर्शकालः । प्रतिपद आद्यो भागो

मोक्षकालः । तदुक्तं ब्रह्मसिद्धान्ते । यावान् कालः पर्वणोऽन्ते तावान् प्रतिपदादिमः । रवीन्दुग्रहणानेहा सपुण्यो मिश्रणाद्भवेत् ॥ ग्रहणानेहा राहुग्रहणकालः । तत्र कर्त्तव्यमाह वृद्धवसिष्ठः । गङ्गातोये तु सम्प्राप्ते इन्दोः कोटी रवेर्दश । गवां कोटिप्रदानेन सम्यग्दत्तेन यत् फलम् ॥ गङ्गास्नाने तत्फलं स्याद्राहुग्रस्ते निशाकरे । दिवाकरे पुनस्तत्र दशसंख्यमुदाहृतमिति ॥ अस्य श्लोकद्वयस्य प्रथमार्द्धमपेक्षितपदाध्याहारेण योजनीयम् । तद्यथा। इन्दोर्ग्रहणे सम्प्राप्ते सति गङ्गातोयेऽवगाहनं कोटिगोदानसमं भवति । रवेर्ग्रहणे ततो दशगुणं फलम् । अयमेवार्थ उपरितनेनाऽर्द्धत्रयेण स्पष्टीकृतः। व्यासोऽपि । इन्दोर्लक्षगुणं पुण्यं रवेर्दशगुणं ततः । गङ्गातोये तु सम्प्राप्ते इन्दोः कोटी रवेर्दश ॥ गवां कोटिसहस्रस्य यत्फलं लभते नरः। तत्फलञ्जाह्नवीस्नाने राहुग्रस्ते निशाकरे ॥ दिवाकरे तु स्नातस्य दशसंख्यमुदाहृतम् । चन्द्रसूर्यग्रहे चैत्र योऽवगाहेत जाह्नवीम् ॥ स स्नातः सर्वतीर्थेषु किमर्थमटते महीमिति ॥ गङ्गाव्यतिरिक्तमहानदीतोये लक्षगुणदशलक्षगुणत्वम्। गङ्गातोये तु कोटिगुणदशकोटिगुणत्वम्। ब्रह्मपुराणेऽपि । तिस्रो नद्यो महापुण्या वेणी गोदा च जाह्नवी । गां हरीशाङ्घ्रिकात् प्राप्ता गङ्गा इतीह कीर्त्तिताः ॥ हरिश्चेशश्च हरीशौ ॥ अङ्घ्रिः पादः।कं शिरः । अङ्घ्रिश्च कं च अङ्घ्रिकम्। हरेः पादादीश्वरस्य शिरसो गां भूमिं प्राप्ता गङ्गा । यद्यपि जाह्नव्येव तादृशी, न तु वेणीगोदे । तथापि, छत्रिणो गच्छन्तीति न्यायेन जाह्नव्या सह निर्दिष्टयोस्तयोरपि गङ्गात्वमविरुद्धम् । यद्वा जाह्नवीजलमेव केनचिन्निमित्तेन ब्रह्मगिरिवायुगिर्योरुद्भूतमिति कृत्वा तयोरपि मुख्यमेव गङ्गात्वम् । तासु गङ्गासु स्नानं मुख्यम् । तदसम्भवे नद्यन्तरेषु स्नायात् । तदुक्तं महाभारते । गङ्गास्नानं प्रकुर्वीत

ग्रहणे चन्द्रसूर्ययोः । महानदीषु वान्यासु स्नानं कुर्याद्यथाविधीति ॥ महानद्यो ब्रह्मपुराणे दर्शिताः । गोदावरी भीमरथी तुङ्गभद्रा च वेणिका । तापी पयोष्णी विन्ध्यस्य दक्षिणे तु प्रकीर्त्तिताः ॥ भागीरथी नर्मदा च यमुना च सरस्वती । विशोका च वितस्ता च विन्ध्यस्योत्तरतस्तथेति ॥ महानद्यसम्भवे जलान्तराण्याह शङ्खः । वापीकूपतडागेषु गिरिप्रस्रवणेषु च । नद्यां नदे देवखाते सरसीषूद्धृताम्बुनि ॥ उष्णोदकेन वा स्नायाद् ग्रहणे चन्द्रसूर्ययोरिति॥एतत्सर्वमभिप्रेत्याह व्यासः । सर्वं गङ्गासमं तोयं सर्वे व्याससमा द्विजाः । सर्वं भूमिसमं दानं ग्रहणे चन्द्रसूर्ययोरिति ॥ उष्णोदकस्यातुरविषयत्वं व्याघ्र आह । आदित्यकिरणैः पूतं पुनः पूतं च वह्निना। अतो व्याध्यातुरः स्नायाद्ग्रहणेऽप्युष्णवारिणेति ॥ गङ्गातोयमारभ्योष्णोदकान्तेषु उत्तरोत्तरस्यानुकल्पत्वमुक्तम् । एतदेवाभिप्रेत्योष्णोदकादिषु समुद्रजलान्तेषु उत्तरोत्तरस्य प्राशस्त्यमाह मार्कण्डेयः। शीतमुष्णोदकात् पुण्यमपारक्यं परोदकात् । भूमिष्ठमुद्धृतात् पुण्यं ततः प्रस्रवणोदकम् ॥ ततोऽपि सारसं पुण्यं ततः पुण्यं नदीजलम् । तीर्थतोयं ततः पुण्यं महानद्यम्बुपावनम् ॥ ततस्ततोऽपि गङ्गाम्बु पुण्यं पुण्यस्ततोऽम्बुधिरिति ॥ मासविशेषेण नदीविशेषो देवीपुराणेऽभिहितः । कार्त्तिके ग्रहणं श्रेष्ठं गङ्गायमुनसङ्गमे । मार्गे तु ग्रहणं प्रोक्तं देविकायां महामुने ॥ पौषे तु नर्मदा पुण्या माघे सन्निहिता शुभा । फाल्गुने वरुणा पुण्या चैत्रे पुण्या सरस्वती॥ वैशाखे तु महापुण्या चन्द्रभागा सरिद्वरा । ज्येष्ठे तु कौशिकी पुण्या आषाढे तापिका नदी ॥ श्रावणे सिन्धुनामा तु तथा भाद्रे तु गण्डकी । आश्विने सरयूः श्रेष्ठा तथा पुण्या तु नर्मदेति ॥ ग्रहणविशेषे तु नदीविशेषस्तत्रैवाभिहितः । गोदावरी महापुण्या चन्द्रे राहुसमन्विते ।

सूर्ये च राहुणा ग्रस्ते तमोभूते महामुने॥ नर्मदातोयसंस्पर्शे कृतकृत्या भवन्ति ते॥ स्नानवत् स्मरणादिष्वपि पुण्यमाह। स्मृत्वा शतक्रतुफलं दृष्ट्वा सर्वाघनाशनम्। स्पृष्ट्वा गोमेधपुण्यं तु पीत्वा सौत्रामणेर्लभेत्॥ स्नात्वा वाजिमखं पुण्यं प्राप्नुयादविचारतः। रविचन्द्रोपरागे च अयने चोत्तरे तथेति॥ क्षेत्रविशेषमाह। गङ्गा कनखलं पुण्यं प्रयागः पुष्करं तथा। कुरुक्षेत्रं महापुण्यं राहुग्रस्ते दिवाकर इति॥ ग्रहणे श्राद्धं विहितं लिङ्गपुराणे। व्यतीपातक्षणो यावान् चन्द्रसूर्यग्रहक्षणः। गजच्छाया तु सा प्रोक्ता पितॄणां दत्तमक्षयमिति॥ महाभारतेऽपि। सर्वस्वेनाऽपि कर्त्तव्यं श्राद्धं वै राहुदर्शने। अकुर्वाणस्तु नास्तिक्यात् पङ्के गौरिव सीदति॥ ऋष्यशृङ्गोऽपि॥ चन्द्रसूर्यग्रहे यस्तु श्राद्धं विधिवदाचरेत्। तेनैव सकला पृथ्वी दत्ता विप्रस्य वै कर इति॥ विष्णुरपि। राहुदर्शनदत्तं हि श्राद्धमाचन्द्रतारकम्। गुणवत् सर्वकामीयं पितॄणामुपतिष्ठत इति॥ ग्रहणे रात्रावपि स्नानादेर्न निषेधः। तथाच शातातपः। स्नानं दानं तपः श्राद्धमनन्तं राहुदर्शने। आसुरा रात्रिरन्यत्र तस्मात्तां परिवर्जयेदिति॥ देवलः। यथा स्नानं च दानं च सूर्यस्य ग्रहणे दिवा। सोमस्यापि तथा रात्रौ स्नानं दानं विधीयते इति॥ श्राद्धं प्रकृत्य कूर्मपुराणे॥ नैमित्तिकं तु कर्त्तव्यं ग्रहणे चन्द्रसूर्ययोः। बान्धवानां च मरणे नारकी स्यादतोऽन्यथा॥ काम्यानि चैव श्राद्धानि शस्यते ग्रहणादिष्विति॥ वारविशेषयोगे फलातिशयमाह व्यासः। रविग्रहः सूर्यवारे सोमे सोमग्रहस्तथा। चूडामणिरिति ख्यातस्तदानन्तफलं भवेदिति॥ वारेष्वन्येषु यत् पुण्यं ग्रहणे चन्द्रसूर्ययोः। तत्पुण्यं कोटिगुणितं ग्रासे चूडामणौ स्मृतमिति॥ अतिथिप्राप्त्यादिवद् ग्रहणस्याऽपि श्राद्धकालमाह मार्कण्डेयः। विशिष्टब्राह्मणे प्राप्ते सूर्येन्दुग्रहणे दिने।

जन्मर्क्षग्रहपीडासु श्राद्धं कुर्यात्तथेच्छयेति ॥ अत्र श्राद्धं नान्नेन, किन्तु हेमादिना ॥ तथाह बौधायनः । अन्नाभावे द्विजाभावे प्रवासे पुत्रजन्मनि । हेमश्राद्धं सग्रहे च कुर्याच्छूद्रः सदैव हीति ॥ शातातपोऽपि । आपद्यनग्नौ तीर्थे च चन्द्रसूर्यग्रहे तथा । आमश्राद्धं द्विजो दद्याच्छूद्रो दद्यात् सदैव हीति ॥ आशौचिनोऽपि ग्रहणे स्नानादि न निषिद्धम् ॥ तथाच वृद्धवसिष्ठः । सूतके मृतके चैव न दोषो राहुदर्शने । तावदेव भवेच्छुद्धिर्यावन्मुक्तिर्न दृश्यत इति ॥ इयं च शुद्धिः सर्वस्मार्त्तकर्मविषया । अविशेषोक्तेः । एतदेवाभिप्रेत्य व्याघ्रः । स्मार्त्तकर्मपरित्यागो राहोरन्यत्र सूतके । श्रौते कर्मणि तत्कालं स्नातः शुद्धिमवाप्नुयादिति ॥ यत्तु ग्रहणनिमित्तमाशौचं, तत् स्नानेन निवर्त्यम् । तदुक्तं ब्रह्माण्डपुराणे । आशौचं, जायते नृणां ग्रहणे चन्द्रसूर्ययोः । राहुस्पर्शे तयोः स्नात्वा स्नानादौ कल्पते नर इति ॥ षट्त्रिंशन्मतेऽपि । सर्वेषामेव वर्णानां सूतकं राहुदर्शने । स्नात्वा कर्माणि कुर्वीत श्रृतमन्नं विवर्जयेदिति ॥ ग्रहणस्याद्यन्तयोः स्नानं विहितं स्मृत्यन्तरे । ग्रस्यमाने भवेत् स्नानं ग्रस्ते होमो विधीयते । मुच्यमाने भवेद्दानं मुक्ते स्नानं विधीयते इति ॥ होमदानवद्देवार्चनमपि स्नानद्वयमध्ये कार्यम् । तदुक्तं ब्रह्मवैवर्त्ते । स्नानं स्यादुपरागादौ मध्ये होमः सुरार्चनमितिं ॥ तत्काले स्वापादिकं न कुर्यात् । तदुक्तं शिवरहस्ये । सूर्येन्दुग्रहणे यावत् तावत् कुर्याज्जपादिकम् । न स्वपेन्न च भुञ्जीत स्नात्वा भुञ्जीत मुक्तयोरिति ॥ मोक्षानन्तरभावि यत् स्नानं तस्य शुद्ध्यर्थतया तत् सचैलं विधेयम् । तदाह वृद्धवसिष्ठः । सर्वेषामेव वर्णानां सूतकं राहुदर्शने । सचैलं तु भवेत् स्नानं सूतकान्नं च वर्जयेदिति । ग्रहणकाले ततः पूर्वं वा यावत् पक्वं तत्सूतकान्नं पश्चादपि न भुञ्जीत । आदिमध्यावसानेषु यद्यद्विहितं तस्य

फलातिशय उक्तो ब्रह्मपुराणे। उपमर्दे लक्षगुणं ग्रहणे चन्द्रसूर्ययोः। पुण्यं कोटिगुणं मध्ये मुक्तिकाले त्वनन्तकमिति॥ अत्र ग्रहणे यद्दानं तत् सत्पात्रे कर्त्तव्यम्। तदुक्तं महाभारते। अयने विषुवे चैव ग्रहणे चन्द्रसूर्ययोः। पात्रभूताय विप्राय भूमिं दद्यात् सदक्षिणामिति॥ पात्रलक्षणमाह याज्ञवल्क्यः। न विद्यया केवलया तपसा वाऽपि पात्रता। यत्र वृत्तमिमे चोभे तद्धि पात्रं प्रकीर्त्तितमिति॥ पात्रे मुख्यानुकल्पं चाह बौधायनः। श्रोत्रियोऽश्रोत्रियो वाऽपि पात्रं वाऽपात्रमेव वा। विप्रब्रुवोऽपि वा विप्रो ग्रहणे दानमर्हतीति॥ अत्र भूमिवद्गवादीन्यपि देयानि। तदुक्तं महाभारते। भूमिर्गावः सुवर्णं वा धान्यं वा यद्यदीप्सितम्। तत्सर्वं ग्रहणे देयमात्मनः श्रेय इच्छतेति॥ प्रतिगृहीतृभेदेन फलतारतम्यं दक्षेणोक्तम्। सममब्राह्मणे दानं द्विगुणं ब्राह्मणब्रुवे। श्रोत्रिये शतसाहस्रं पात्रे त्वानन्त्यमश्नुत इति॥ अह्नि सूर्यग्रहणं रात्रौ चन्द्रग्रहमिति हि प्रसिद्धिः सार्वजनीना। तादृशे ग्रहणे यद् वक्तव्यं तदुक्तम्। यत्तु कालविपर्यासेन प्राप्यमाणं ज्योतिःशास्त्रप्रसिद्धं ग्रहणं तत्र स्नानादिकं न कर्त्तव्यम्।

तदुक्तं निगमे। सूर्यग्रहो यदा रात्रौ दिवा चन्द्रग्रहस्तथा। तत्र स्नानं न कुर्वीत दद्याद्दानं च न क्वचिदिति॥ ग्रस्तास्तमये जाबालिराह। संक्रान्तौ पुण्यकालस्तु षोडशोभयतः कलाः। चन्द्रसूर्योपरागे च यावद्दर्शनगोचर इति॥ ग्रस्तस्यास्तमानपर्यन्तं दर्शनगोचरत्वात्तावान् पुण्यकालो भवति। ग्रहणे भोजनव्यवस्थामाह मनुः। चन्द्रसूर्यग्रहे नाद्यादद्यात् स्नात्वा विमुक्तयोः। अमुक्तयोरस्तगयोर्दृष्ट्वा स्नानं परेऽहनीति॥ ग्रहे ग्रहणकाले। स्पर्शमारभ्य मोक्षपर्यन्तो ग्रहणकालः। तस्मिन् काले न भुञ्जीत। किन्तु राहुणा चन्द्रसूर्ययोर्मुक्तयोः सतोः पश्चात् स्नात्वा भुञ्जीत। यदा ग्रस्तास्तमयस्तदा

परेद्युर्विमुक्तौ तौ दृष्ट्वा भुञ्जीत । न केवलं ग्रहणकाले भोजनाभावः, किन्तु ग्रहणात् प्रागपि । तदाह व्यासः । नाद्यात् सूर्यग्रहात् पूर्वमह्नि सायं शशिग्रहात् । ग्रहकाले च नाश्नीयात् स्नात्वाऽश्नीयाद्विमुक्तयोः ॥ मुक्ते शशिनि भुञ्जीत यदि न स्यान्महानिशा । अमुक्तयोरस्तगयोरद्याद् दृष्ट्वा परेऽहनीति ॥ पूर्वकालभोजननिषेधे विशेषमाह वृद्धवसिष्ठः । ग्रहणं तु भवेदिन्दोः प्रथमादधि यामतः । भुञ्जीतावर्त्तनात् पूर्वं पश्चिमे प्रथमादहः ॥ रवेस्त्वावर्तनादूर्ध्वमर्वागेवं निशीथतः । चतुर्थे प्रहरे चेत् स्याच्चतुर्थप्रहरादध इति ॥ रात्रौ प्रथमयामादूर्ध्वं चन्द्रग्रहणं चेद् आवर्त्तनान्मध्याह्नात् पूर्वं भुञ्जीत । रात्रिपश्चिमयामे च रात्रिप्रथमयामादर्वाग् भुञ्जीत । अह्नस्तृतीयप्रहरे चेद्रविग्रहस्तदा पूर्वदिनस्यार्द्धरात्रात् प्राग्भुञ्जीत । अह्नश्चतुर्थप्रहरे रविग्रहणं चेद्रात्रेश्चतुर्थप्रहरादधो भुञ्जीतेत्यर्थः । निशीथो मध्यरात्रः । शशिग्रहणे यामत्रयेण व्यवधानमपेक्षितम् । सूर्यग्रहणे यामचतुष्टयेनेति तात्पर्यार्थः । तथाच वृद्धगौतमः । सूर्यग्रहे तु नाश्नीयात् पूर्वं यामचतुष्टयम् । चन्द्रग्रहे तु यामांस्त्रीन् बालवृद्धातुरैर्विनेति ॥ बालवृद्धातुरविषये मत्स्यः । अपराह्णे न मध्याह्ने मध्याह्ने न तु सङ्गवे । भुञ्जीत सङ्गवे चेत् स्यान्न पूर्वं भुजिमाचरेदिति ॥ समर्थस्य भोजने प्रायश्चित्तमुक्तं कात्यायनेन । चन्द्रसूर्यग्रहे भुक्त्वा प्राजापत्येन शुद्ध्यति । तस्मिन्नेव दिने भुक्त्वा त्रिरात्रेणैव शुद्ध्यतीति ॥ शशिग्रहे यामत्रयस्यापवादमाह वृद्धवसिष्ठः । ग्रस्तोदये विधोः पूर्वं नाहर्भोजनमाचरेदिति ॥ ग्रस्तास्तमये विशेषमाह भृगुः । ग्रस्तावेवास्तमानं तु रवीन्दू प्राप्नुतो यदि । परेद्युरुदये स्नात्वा शुद्धो ऽभ्यवहरेन्नर इति ॥ वृद्धगार्ग्योऽपि । सन्ध्याकाले यदा राहुर्ग्रसते शशिभास्करौ । तदहर्नैव भुञ्जीत रात्रावपि कदाचने-

ति ॥ विष्णुधर्मोत्तरेऽपि । अहोरात्रं न भोक्तव्यं चन्द्रसूर्यग्रहो यदा । मुक्तिं दृष्ट्वा तु भोक्तव्यं स्नानं कृत्वा ततः परमिति ॥ ननु मेघाद्यन्तर्द्धाने चाक्षुषं दर्शनं न संभवतीतिचेत् । दर्शनशब्देन शास्त्रीयज्ञानस्य विवक्षितत्वात् । तदाह वृद्धगौतमः । चन्द्रसूर्यग्रहे नाद्यात्तस्मिन्नहनि पूर्वतः । राहोर्विमुक्तिं विज्ञाय स्नात्वा कुर्वीत भोजनमिति ॥ एवं तर्हि परेद्युरुदयात् प्रागपि शास्त्रविज्ञानसंभवात् तदैव भोजनं प्रसज्ज्येत । तन्न । परेद्युरुदयेऽभ्यवहरेत्, अहोरात्रं न भोक्तव्यमिति वचनद्वयेन तदप्रसक्तेः । यत्तु स्कन्दपुराणे । यदा चन्द्रग्रहस्तात निशीथात् परतो भवेत् भोक्तव्यं तात पूर्वाह्णे नापराह्णे कथञ्चनेति ॥ यत्तु, पूर्वं निशीथाद्ग्रहणं यदा चन्द्रस्य वै भवेत् । तदा दिवा न कर्त्तव्यं भोजनं शिखिवाहनेति ॥ तदिदं यामत्रयाभिप्रायम् । चन्द्रग्रहे तु यामांस्त्रीनिति विशेषस्य वृद्धगौतमेनाभिधानात् । पापक्षयकामो ग्रहणदिनमुपवसेत् । तदाह दक्षः । अयने विषुवे चैव ग्रहणे चन्द्रसूर्ययोः । अहोरात्रोषितः स्नातः सर्वपापैः प्रमुच्यत इति ॥ पुत्री तु नोपवसेत् । तदाह नारदः । संक्रान्त्यामुपवासं च कृष्णैकादशिवासरे । चन्द्रसूर्यग्रहे चैव न कुर्यात् पुत्रवान् गृहीति ॥ तस्य प्रतिषिद्धे उपवासे भोजनकालः । स्मृत्यन्तरे दर्शितः । सायाह्ने सङ्गवेऽश्नीयाच्छारदे सङ्गवादधः । मध्याह्ने परतोऽश्नीयान्नोपवासो रवेर्ग्रह इति ॥ शारदोऽपराह्णः । यदाऽपराह्णोऽथ शारद इति श्रुतेः । ग्रस्तास्तमये तु पुत्रिणोऽप्युपवास एव । अहोरात्रं न भोक्तव्यमिति भोजनप्रतिषेधात् ॥

इति श्रीमाधवीये कालनिर्णये ग्रहणनिर्णयः ॥ ९ ॥

श्रीहरिः ।

# सूचीपत्रम् ।

—:o:—

# सूचीपत्रम् ।

| | | रु, आ. पा. |
|---|---|---|
| १ | परिभाषेन्दुशेखरः । भैरवीव्याख्यासमेतः । ... | १—४-० |
| २ | अर्थसंग्रहः । सटीकः ( मीमांसा ) ... ... | १—४-० |
| ३ | षड्दर्शन मूलमात्र एकत्र ... ... ... | १—२-० |
| ४ | पदार्थदीपिका ( न्यायः ) ... ... ... | ०—८-० |
| ५ | भाट्टभाषा । प्रकाशसहिता ( मीमांसा ) ... | ०—८-० |
| ६ | प्रश्नवैष्णवः ( ज्योतिषः ) ... ... ... | ०—७-० |
| ७ | प्राकृतप्रकाशः । वररुचिकृतः सूत्राणां भामहकृतव्याख्या | ०—८-० |
| ८ | वृद्धिदीपिका ( धर्मशास्त्रम् आशौचकाण्डम् )... | ०—२-० |
| ९ | धातुपाठः । ... ... ... ... | ०—२-० |
| १० | भगवद्गीता । मधुसूदनटीका सहिता । ... | ३—०-० |
| ११ | व्युत्पत्तिवादः । मूलम् ... ... ... | १—८-० |
| १२ | भैरवी । शब्दरत्नव्याख्या ( कारकान्ता ) ... | २-१२-० |
| १३ | परमलघुमञ्जूषा । ... ... ... | ०—४-० |
| १४ | लघुशब्देन्दुशेखरः सम्पूर्णः । ... ... | ४—०-० |
| १५ | लघुशब्देन्दुशेखरोऽव्ययीभावान्तः । ... ... | १—४-० |
| १६ | मनोरमा शब्दरत्नसहिता सम्पूर्णा ... ... | ६—०-० |
| १७ | मनोरमा शब्दरत्नसहिताऽव्ययीभावान्ता । ... | २—०-० |
| १८ | किरात ३ सर्गः । ... ... ... ... | ०—४-० |
| १९ | साङ्ख्यतत्त्वकौमुदी मूलमात्र । ... ... | ०—६-० |
| २० | नारदसंहिता ( ज्योतिषम् ) । ... ... | ०—६-० |
| २१ | मेदनीकोषः । ... ... ... ... | ०-१५-० |
| २२ | पूर्वपक्षावली । ... ... ... ... | ०—४-० |
| २३ | उत्तरपक्षावली । ... ... ... ... | ०—४-० |
| २४ | मीमांसापरिभाषा । ... ... ... | ०—४-० |
| २५ | कारिकावली । साम० दिन० मुक्ता० स० शब्दखण्डान्ता | ३—०-० |
| २६ | कालीशङ्करी जागदीश्याः पञ्चलक्षण्याः । ... | ०—३-० |
| २७ | सैव—माथुरी पञ्चलक्षण्याः । ... ... | ०—२-० |
| २८ | परिभाषापाठः । ... ... ... ... | ०—१-६ |
| २९ | मीमांसासूत्रपाठः । ... ... ... ... | ०—२-० |
| ३० | सांख्यसूत्रपाठः । ... ... ... ... | ०—२-० |
| ३१ | पातञ्जलयोगसूत्रपाठः । ... ... ... | ०—२-० |
| ३२ | वैशेषिकसूत्रपाठः । ... ... ... | ०—२-० |

| | | रु. आ. पा. |
|---|---|---|
| ३३ | न्यायसूत्रपाठः। ... ... ... ... | ०—२—० |
| ३४ | वेदान्तसूत्रपाठः। ... ... ... | ०—२—० |
| ३५ | मीमांसान्यायप्रकाशः ( आपोदेवकृतः ) ... | ०—१०—० |
| ३६ | चरणव्यूहः—सभाष्यः शौनकीय परिशिष्टः स० ... | ०—६—० |
| ३७ | नानदत्त पचीसी ... ... ... | ०—१—० |
| ३८ | शब्दकौस्तुभः—नवाह्निकमात्रम् ... ... | ४—०—० |
| ३९ | अवदानकल्पलता ( तृतीयपल्लव ) ... ... | ०—४—० |
| ४० | व्याकरणमहाभाष्यम् कैयट टीकोपेतम् ... | १०—०—० |
| ४१ | तस्यैव—नवान्हिक कैयट विवरण सहित ... | २—०—० |
| ४२ | काशिकावृत्ति—ससूत्रा ... ... ... | ५—०—० |
| ४३ | पातञ्जलयोगदर्शन—स्वामी बालरामजीकृत टिप्पणी स० | ३—०—० |
| ४४ | वैयाकरणभूषणसार—दर्पणटीकोपेता ... | २—०—० |
| ४५ | माथुरीपञ्चलक्षणी ... ... ... ... | ०—२—० |
| ४६ | मीमांसादर्शनम्—शावरभाष्य सहितम् ... | १०—०—० |
| ४७ | कालमाधव ... ... ... ... | १—८—० |
| ४८ | तत्त्वार्थदीपः। आवरणभङ्गसहितः। शास्त्रार्थप्रकरणम्। सर्वनिर्णयप्रकरणम्। ... ... ... | ५—०—० |
| ४९ | न्यायसिद्धान्तमञ्जरी। तर्कप्रकाशटीकासहित। ... | १—०—० |
| ५० | जातकतत्त्वम्। ... ... ... ... | ०—१२—० |
| ५१ | प्रश्नभूषणम् प्रश्नविचारका बहुतउत्तमग्रन्थ) ... | ०—४—० |
| ५२ | बीजगणितम्। म०म०पं० सुधाकरद्विवेदि—कृत टि० स० | १—४—० |
| ५३ | बीजगणितम्। म०म० पं० बापूदेवशास्त्रीकृत पूर्वार्धम् | २—०—० |
| ५४ | सिद्धान्तशिरोमणिः। म० म० पं० बापूदेव शास्त्री | ४—०—० |
| ५५ | लीलावती। म०म०पं० सुधाकरद्विवेदि कृत टिप्पणी स० | १—०—० |
| ५६ | दीर्घवृत्तिलक्षणम्। ... ... ... ... | १—०—० |
| ५७ | शुभकर्मनिर्णयः। ... ... ... ... | १—०—० |
| ५८ | पाणिनीयशिक्षा। भाष्यसहिता। ... ... | ०—२—० |
| ५९ | वसिष्ठसिद्धान्तम् ... ... ... ... | ०—१—६ |
| ६० | शास्त्रसिद्धान्तलेशः। सटीकः। ( वेदान्तः ) पत्रात्मक | २—०—० |
| ६१ | नागेशोक्तिप्रकाश। शब्देन्दुशेखरव्याख्या नपदान्तसूत्र-पर्यन्त ... ... ... ... ... | १—८—० |
| ६२ | चन्द्रकला। भैरवमिश्रकृता शब्देन्दुशेखरव्याख्या सं० | ५—०—० |
| ६३ | सांख्यतत्त्वकौमुदी स्वामीबालरामोदासीनकृतटीकास० | २—४—० |
| ६४ | शाकटायनव्याकरणम् ... ... ... | ३—४—० |

पत्रादिप्रेषणस्थानम् { हरिकृष्णदास बनारससिटी

